५९ लक्ष्मणश्यामाद्वासिष्ठे
६० विकर्णकुषीतकात् काश्यपे
६१ भ्रौवेयः
६२ कल्याण्यादेरिङ् च
६३ कुलटाया वा
६४ क्षुद्राभ्यो द्रण् वा
६५ गोधाया दुष्टे
६६ पण्डजण्डाच्चारणं
६७ चटकादैरण्
६८ चटका
६९ गृष्ट्यादिचतुःपाद्भ्यो ढञ्
७० वाडवेयो वृषे
७१ भ्रातृव्यः
७२ श्वसुरश्च छः
७३ मातृपित्रादेर्ढण्ठणौ
७४ रैवत्यादेष्ठण्
७५ स्त्रीवृद्धाद्गर्हे णश्च
७६ सुयाम्नः सौवीरेषु फिञ्
७७ फाण्टाहृतिमिमताण्णश्च
७८ भागवित्तितार्णबिन्दवाक-
शापेयाद्गर्हे ठण् वा
७९ वृषसुयामयमुन्दात् फिञ-
प्रछश्च
८० कुर्वादिर्ण्यः
८१ सम्राजः क्षत्रिये
८२ कारिसेनान्तलक्ष्मणादिञ्
८३ तिकादेः फिञ्
८४ दगुकोसलकर्मारछागवृषा-
द्युट् च
८५ द्व्यचोऽणः

८६ दोर्वावृद्धात्
८७ पुत्रान्तात्
८८ काकलङ्काशाकिनगारेयका,
कंस्यवर्मिवर्मिणश्च कं च
८९ प्रायोऽदोः फिः
९० कुलात् खः
९१ ढकञौ ग्रामणे
९२ दुःकुलाड्ढण्
९३ महाकुलादञ्खञ्
९४ श्वसुराद्यः
९५ जातौ राज्ञः
९६ क्षत्राद् घः
९७ मनोर्याण् षुक् च
९८ राष्ट्रराजन्यस्वपाद्राजाप-
त्ययञ् त्रिः
९९ गान्धारिशाल्वेयाभ्याम्
१०० पूरुकुरुयञ्मगधकलिङ्गशूर-
मसादण् ।
१०१ साल्वांशाश्मककलकूटप्रत्य
ग्रथादिञ् [दोऽञ्यः
१०२ नादिक्षित्कुरुकोसलाजा-
१०३ पाण्ड्यः
१०४ शकादिभ्यश्च लुक्
१०५ कुन्त्यवन्तेस्स्त्रियाम्
१०६ कुरोर्वा
१०७ अरतोऽप्राग्भर्गादेः
१०८ बहुष्वस्त्रियाम्
१०९ यस्कादिर्गोत्रे
११० यञञोऽगोपवनादिभ्याप'
र्णान्तात्

१११ कौण्डिन्यागस्त्ययोः कु-
ण्डिनागस्ती च
११२ भृगुकुत्सवशिष्ठगोतमाङ्गि-
रोऽत्रेः
११३ बह्वचः प्राग्भरतेष्विञः
११४ वोपकादेः
११५ तिककितवादौ द्वन्द्वे
११६ तथात्र्यादेः
११७ वान्येन
११८ यञादेर्द्व्यर्थकेषु षष्ठ्यास्त-
त्पुरुषे
११९ नाणर्थेऽचि
१२० गर्गभार्गविका
१२१ यूनि
१२२ फण्फिञोर्वा
१२३ ञीञः
१२४ जिदार्षादणिञोः
१२५ वैदाद्यंविप्रात्
१२६ प्राग्दिवञः
१२७ न लौल्वल्यादेः
१२८ भिक्षादेश्च समूहे
१२९ क्षुद्रकमालवात्सेनानाम्नि
१३० गोत्रोक्षवत्सोष्ट्राजोरभ्रवृ-
द्धमनुष्यराजन्यराजपुत्ररा-
ज्ञोवुञ्
१३१ केदाराण्यश्च
१३२ कवचिहस्त्यचित्ताच्च ठण्
१३३ धेनोरनञः
१३४ ब्राह्मणमाणववाडवाद्यः
१३५ गणिकाया यः
१३६ केशाद्वा
१३७ वाऽश्वात्
१३८ पार्श्वम्
१३९ पृष्ठ्याहीनौ क्रतौ
१४० चरणाद्धर्मवत्
१४१ गोरथवातात्त्रकट्योलम्
१४२ पाशादेश्च यः
१४३ ग्रामजनबन्धुगजसहायात्तल्
१४४ श्वखलादिभ्योऽजिन्
१४५ पुरुषात् कृतहितवधवि-
कारे च ढञ्
१४६ विकारे
१४७ प्राण्योषधिवृक्षेभ्योऽवयवे च
१४८ तालाद्धनुषि
१४९ त्रपुजतोष्षक् च
१५० शम्या लक्
१५१ परशव्यस्य यलुक्
१५२ कंसीयाञ्ञ्यः
१५३ हेमार्थान् माने
१५४ द्रोर्वयः
१५५ पयोद्रोर्यः
१५६ एण्या ढञ्
१५७ कौशेयम्
१५८ उष्ट्राद्वुञ्
१५९ वोमोर्णात्
१६० मानात् क्रीतवत्
१६१ हेमादिभ्योऽञ्
१६२ वाऽभक्ष्याच्छादने मयट्
१६३ शराद्येकाचः
१६४ दोरप्राणिनः

१६५ गोव्रीहेश्श कृत्पुरोडाशे
१६६ तिलयवपिष्टादनाम्नि
१६७ पिष्टिकाहैयङ्गवीनम्
१६८ नातोऽफलद्रुवयात्
१६९ बहुलं श्लुक् पुष्पमूले
१७० फले
१७१ प्लक्षादेरण्
१७२ जम्ब्वा वा
१७३ वोढृग्रध्येत्रोः
१७४ न्यायादिपदकल्पलक्षणान्त-
क्रत्वाख्यानाख्यायिकाट्ठण्
१७५ अकल्पात् सूत्रात्
१७६ अधर्मक्षत्रसंसर्गाङ्गत्रेर्विद्यायाः
१७७ याज्ञिकौक्थिकलौकाय-
तिकानुब्राह्मणी
१७८ शतषष्टेः पथष्टट्
१७९ पदोत्तरपदेभ्यष्ठः
१८० शिक्षामीमांसासामक्रमपदा-
द्वुच्
१८१ ससर्वादेश्लुक्
१८२ संख्याकात् सूत्रे
१८३ प्रोक्तात्
१८४ वेदेन् ब्राह्मणम्
१८५ मातृपितुर्भ्रातुर्युलड्व्यम्
१८६ पित्रोर्डामहट्
१८७ दुग्धेऽवेस्सोढदूसमरीसम्
१८८ राष्ट्रेऽनङ्गादिभ्यः
१८९ सौरिकयैषुकार्यादेर्विध-
भक्तम्
१९० राजन्यादिभ्यो वुञ्
१९१ वसातेर्वा
१९२ निवासादूरभवाविति देशे
नाम्नि
१९३ सोऽत्रास्ति
१९४ तेन निर्वृत्तं च
१९५ नद्यां मतुः
१९६ मध्वादेः
१९७ कुमुदनडवेतसमहिषाड्डित्
१९८ नडशादाड्ड्वलः
१९९ शिखायाः
२०० शिरीषाट्ठकण्
२०१ शर्करायाष्टण्छाण् च
२०२ रैनूसेलवुणणयेञ्याञ्ढण्फ-
णफिञ्छकक्ठञ्ञकण् ठठ-
णोऽश्मप्रेक्षातृणकाशारीह-
णसुपन्थि सुतङ्गमबलाह-
स्सखिपन्थिकर्णोत्करनड
कुशाश्वयवराहकुमुदाश्व-
त्थादिभ्यः
२०३ सास्य पौर्णमासी
२०४ आग्रहायण्यश्वत्थाट्ठण्
२०५ चैत्रीकार्तिकीफाल्गुनी-
श्रावणाद्वा
२०६ देवता
२०७ पैङ्गाक्षिपुत्रादिशुक्राच्छ
घम्
२०८ शतरुद्रापोनपादपान्नपा-
तस्तृ चातः
२०९ महेन्द्राद्वा
२१० द्यावापृथिवीशुनासीरा-

ग्रीषोवसन्तत्वद्धास्तोष्पति-
गृहमेधाच्छयौ
२११ वायूषःपितृनोर्यः
२१२ कंसीमात्स्यण्
२१३ महाराजप्रोष्ठपदाट्ठण्
२१४ कालाद्भववत्
२१५ आदेश्च्छन्दसः प्रगाथे
२१६ युद्धे र्थयोद्धृभ्यः
२१७ भावघञोऽस्याणः
२१८ श्यैनम्पाताऽतैलम्पाते
२१९ प्रहरणात् क्रीडायां णः
२२० टो रागाद्रक्ते
२२१ लाक्षारोचनाट्ठण्
२२२ शकलकर्दमाद्वा
२२३ नीलपीतकम्
२२४ गुरूदयाद्वाद्युक्तेऽब्दे
२२५ चन्द्रोपेतात् काले
२२६ श्लुगप्रयुक्ते
२२७ द्वन्द्वाच्छः
२२८ श्रवणाश्वत्थान्नाम्न्यः
२२९ दृष्टे साम्नि
२३० गोत्रादङ्कवत्
२३१ वामदेव्यम्
२३२ जाते चाण् द्विर्डिद्वा
२३३ छन्ने रथे
२३४ पाण्डुकम्बली
२३५ तत्रोद्धृत ममत्रेभ्यः
२३६ स्थण्डिले शेते व्रती
२३७ संस्कृते भक्षे
२३८ शूल्योख्यक्षैरेयदाधिकौ
दधिवत् कौदधिवतम्
२३९ क्वचित्

इति शाकटायनसूत्रपाठे
द्वितीयस्याध्यायस्य
चतुर्थ पादः ॥

---

द्वितीयाध्यायः समाप्तः ॥

---

प्रथमः पादः ।

१ नद्यादिराष्ट्रदूरोत्तराद्ढ
णचेत्याहञ्
२ पारावारावारपारेभ्यः खः
३ ग्रामाद्यखञ्
४ कत्र्यादेश्च ढकञ्
५ कुलाख्याया यलुक् च
६ कुलकुक्षिग्रीवाच्छ्वास्यल-
ङ्कारे
७ दक्षिणापश्चात्पुरसस्त्यण्
८ क्वेहामातस्त्रात्यच्
९ निसो गते
१० वैषमोद्यश्श्वसः
११ द्युदक्प्रागपाक् प्रतीचो यः
१२ कन्थायाष्ठण्
१३ वर्णौ वुञ्
१४ वल्ह्युदिंपर्दिकापिश्या-
ष्फट्
१५ रङ्कोः प्राणिनि वा
१६ रूप्योत्तरपदारण्याणः
१७ दिगादेरनाम्नः

१८ मद्रादञ्
१९ उदग्ग्रामाद्यकृल्लोम्नः
२० गौष्ठीतैकीगोमतीशूरसेनवा
हीकात्
२१ शकलादेर्वृद्धात्
२२ इञः
२३ न द्व्यचः प्राग्भरतेषु
२४ भवतष्ठण्छस्
२५ जनपदराज्ञोऽकृञः
२६ दोश्छः
२७ उष्णादिभ्यः कालात्
२८ ठ्यादिभ्यष्ठञिगठौ
२९ काश्यादिवाहीकग्रामात्
३० वोशीनरग्रामात्
३१ वृजिमद्राद्देशात्कः
३२ ओष्ठण्
३३ दोरीव प्राचः
३४ ऐरोपान्त्याद्वुञ्
३५ प्रस्थपुरवहान्तयोपान्त्य
धन्वनः
३६ राष्ट्रेभ्यः
३७ बहुविषयेभ्यः
३८ धूमादिकच्छाग्निवक्त्रवर्तो
त्तरपदात्
३९ सौविरेषु कुलात्
४० समुद्रान्नृनावोः
४१ नगरात्कुत्सादाक्ष्ये
४२ पथ्यध्यायन्यायविहारत्रि-
भेऽरण्यात्
४३ गोमये वा

४४ कुरुयुगन्धरात्
४५ साल्वाद्गोयवाग्वपत्तौ
४६ कच्छादेर्नृनृस्थे
४७ कोपान्त्याच्चाण्
४८ पृथिवीमध्यान्निवासान्म
ध्यमस्वास्य चरणे
४९ छः
५० गहादिगर्त्तोत्तरपदेभ्यः
५१ दोः कन्थापलदनगरग्राम-
ह्रदोत्तरपदकोपान्त्यात्
५२ कटादेः प्राचः
५३ पर्णकृकणाद्भारद्वाजात्
५४ पर्वतान्नरे
५५ वा
५६ वेणुकादिभ्यश्छण्
५७ युष्मदस्मदोऽञ्खञौ वाक-
ञ्चैकस्मिँस्तवकममकम्
५८ धोऽर्थात्
५९ मादेष्ठण्
६० दिगादेस्तौ
६१ ग्रामराष्ट्रस्याण् ठणौ
६२ परावराधमोत्तमादेर्यः
६३ अन्तावोऽधसो मः
६४ समानादिलोकोत्तरपदाद्या-
त्मादिभ्यष्ठण्
६५ ऊर्ध्वाद्दमदेहान्मकचोर्ध्व-
स्यैकेषाम्
६६ वर्षाकालेभ्यः
६७ शरदः कर्मणि श्राद्धे
६८ रोगातपे वा

६९ निशाप्रदोषहेमन्तात्
७० लुक्कोऽणि
७१ पुराणम्
७२ श्वसस्तट् च
७३ पूर्वाह्णापराह्णात्तनट्
७४ सायंचिरंप्राह्णे प्रगेऽव्ययात्
७५ चिरपरुत्परारेस्त्नः
७६ भर्तुसन्ध्यादेरण्
७७ संवत्सरात्पर्वफले
७८ प्रावृष एण्यः
७९ स्थोऽन्वछिधद्वीपात्
८० पश्चादाद्यन्ताग्रादिमः
८१ मध्यान्मः
८२ उत्कर्षापकर्षयोरः
८३ स्थामाजिनान्ताच्छलुक्
८४ डेकृतलब्धक्रीतसम्भूते
८५ कुशले
८६ पथोऽकः
८७ कोऽश्मादेः
८८ जाते
८९ प्रावृषष्ठः
९० शरदो वुञ् नाम्नि
९१ सिन्धवपकरात्काणौ
९२ पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्कराद्वुच्
९३ पन्थकः
९४ वाऽश्वामावास्यायाः
९५ श्रविष्ठाषाढाच्छण्च
९६ फल्गुन्याष्टः
९७ पुष्यार्थपुनर्वसुहस्तविशाखानुराधाबहुलास्वातेस्त्रक्
९८ चित्रारेवतीरोहिण्याःस्त्रियाम्
९९ बान्यवत्सशालात्
१०० स्थानान्तगोशालखरशालात्
१०१ सोदर्यसमानोदर्यौ
१०२ कालात्साधुपुष्प्यत्पच्यमाने
१०३ उप्ते
१०४ आश्वयुज्या वुञ्
१०५ ग्रीष्मवसन्ताद्वा
१०६ देय ऋणे
१०७ कालाप्यश्वत्थयवबुसोमाव्यासैपसमसोऽकः
१०८ ग्रीष्मावरसमाद् वुञ्
१०९ संवत्सराग्रहायण्याष्ठश्च
११० स्वति मृगे
१११ जयिनि च
११२ भवे
११३ दिगाद्यङ्गांशाद्यः
११४ मध्याच्छ्णदिनामश्च
११५ जिह्वामूलाङ्गुलेश्छः
११६ वर्गान्तात्
११७ यखौ चाशब्दे
११८ दृतिकुक्षिकलशिवस्त्यहेर्ढञ्
११९ आस्तेयम्
१२० ग्रीवाया अण्च
१२१ चतुर्मासान्नाम्नि

१२२ यज्ञे ञ्यः
१२३ गम्भीरपञ्चजनबहिर्देवात्
१२४ परिमुखादेरव्ययीभावात्
१२५ पर्यनोर्ग्रामाट्टण्
१२६ उपाज्जानुनीविकर्णात्प्राये
१२७ अन्तः पूर्वात्
१२८ ठोन्तः पुराड्ढौ
१२९ कर्णललाटात्कः
१३० ङसो व्याख्याने च ग्रन्थात्
१३१ ऋग्द्व्यज्ञिज्याभ्यष्टण्
१३२ ऋषेरध्याये
१३३ बह्वृचः प्रायः
१३४ पौरोडाशपुरोडाशाट्ठट्ठौ
१३५ छन्दसो यः
१३६ शिक्षादेश्चाण्
१३७ ङसस्त्वे
१३८ हलसीराट्ठण्
१३९ समिध आधाने टेन्यण्
१४० आग्नीध्रं गृहे
१४१ रथात्सादेश्च वोढ्रङ्गे
१४२ यः
१४३ वाहनादेरञ्
१४४ वाहनात्
१४५ वाह्यपथ्युपकरणे
१४६ वहेस्तुरिट् च
१४७ द्वन्द्वाद्विवाहे वुच्
१४८ वैरे देवासुरादिभ्यः
१४९ चरणात् वुञ्
१५० धर्माम्नाये
१५१ छन्दोगौक्थिकयाज्ञिकबह्वृ-
चनटाञ्ञ्यः
१५२ आथर्वणोऽण्
१५३ शाकलात्सङ्घघोषाङ्कल-
क्षणे वा
१५४ गोत्रादङ्यञिञः
१५५ वुञ् शिष्यदण्डमाणवे
१५६ रैवतिकादेश्छः
१५७ कौपिञ्जलहास्तिपदादण्
१५८ ङसेरागते
१५९ विद्यायोनिसंबन्धात् वुञ्
१६० पित्र्यं वा
१६१ उष्ठण्
१६२ आयस्थानात्
१६३ शुण्डिकादेरण्
१६४ नृहेतुभ्यो मयड्रूप्यौ वा
१६५ गोत्रादङ्कवत्
१६६ प्रभवति
१६७ त्यदादेर्मयट्
१६८ वैदूर्यः
१६९ टः प्रोक्ते
१७० मौदादिभ्यः
१७१ कठादिभ्यश्श्लुग्वेदे
१७२ तित्तिरिवरतन्तुखण्डिको-
खाच्छण्
१७३ छगलिनो णिढन्
१७४ शौनकादिभ्यो णिन्
१७५ पुराणे कल्पे
१७६ काश्यपकौशिकाद्देवच्च
१७७ शिलालिपाराशर्यात्नटभि-
क्षु सूत्रे

१७८ कुशाश्वकापिलेयकर्मन्दादिन्
१७९ एकदिशि
१८० तस्
१८१ यश्चोरसः
१८२ उपज्ञाते
१८३ नाम्नि कृते
१८४ कुलालादेर्वुञ्
१८५ छन्दस्योरस्यौरससर्वचर्मीणसार्वचर्मीणाः
१८६ ग्रन्थे
१८७ अमोऽधिकृत्य
१८८ ज्योतिषम्
१८९ द्वन्द्वेन्द्रजननादिभ्यः प्रायश्छः
१९० गच्छति पथिदूते
१९१ अभिनिष्क्रामति द्वारे
१९२ भजति
१९३ महाराजाचित्तादद्देशकालाट्ठण्
१९४ वासुदेवार्जुनाद्वुच्
१९५ गोत्रक्षत्रियेभ्यः प्रायो वुञ्
१९६ सरूपाद्द्रे राष्ट्रवत्सर्वम्
१९७ सोऽभिवासादस्य
१९८ अभिजनात्
१९९ खोऽस्त्राजीवेऽत्रेः
२०० तुदीवर्मत्या ढञ्
२०१ शण्डिकसिन्धवादिशलातुराण्याञ्छण्

---

इति शाकटायनीयसूत्रपाठे तृतीयस्याध्यायस्य प्रथमः पादः ॥

—:o:—

द्वितीयः पादः

१ ठण्
२ टोजितजयद्दीव्यत्खनत्सु
३ संस्कृते
४ कोपान्त्यकुलत्थादण्
५ तरति
६ नौद्व्यचष्ठः
७ चरति
८ पर्पादेष्ठट्
९ पदिकः
१० श्वगणाद्वा
११ वेतनादेर्जीवति
१२ वस्नक्रयविक्रयेभ्यष्ठः
१३ वा स्वायुधात्
१४ आतीनञ्
१५ भस्त्रोत्सङ्गादेष्टठ्ण् हरति
१६ विवधवीवधात्
१७ अण् कुटिलिकायाः
१८ निर्वृत्तेऽक्षद्यूतादेः
१९ भावादिमः
२० क्त्रिरिमे
२१ याचितापमित्यात्कण्
२२ संसृष्टे
२३ चूर्णलवणमुद्गादिनाण्
२४ व्यञ्जनैरुपसिक्ते
२५ ओजस्सहोऽम्भसा वर्तते

२६ तत्प्रत्यनोर्लोमकूलपात्
२७ परेर्मुखपार्श्वात्
२८ दधाने वृद्धिं गर्ह्यं
२९ कुसीदाट्टट्
३० दशैकादशाट्टश्च
३१ रक्षदुञ्छतोः
३२ मीनमत्स्यपक्षिमृगार्थाद्घ्नन्ति
३३ परिपन्थं तिष्ठति च
३४ परिपथम्
३५ माथोत्तरपदपदव्याक्रन्दाद्धावति
३६ पश्चात्यनुपदात्
३७ परदारादीन्यति
३८ प्रतिपथाट्टश्च
३९ पदोत्तरपदपदार्थललामप्रतिकण्ठाद्गृह्णाति ।
४० धर्माधर्मौ चरति
४१ समूहात्समवेते
४२ परिषदं ण्यः
४३ सेनां वा
४४ सुस्नातादीन्पृच्छति
४५ प्रभूतादिभ्यो ब्रुवति
४६ माशब्दमित्यादिभ्यः
४७ शाब्दिकदार्दुरिकलालाटिककौक्कुटिकाः
४८ ऋतो धर्म्ये
४९ नराद्युतोऽण्
५० वैशस्त्रवैभाजित्रे
५१ वक्रये
५२ तदस्य पण्यम्
५३ किशरादेष्ठट्
५४ शलालेर्वा
५५ शिल्पम्
५६ मड्डुकझर्झराद्वाण्
५७ प्रहरणम्
५८ परश्वधाद्वाण्
५९ शक्तियष्टेष्टीकण्
६० इष्टादिभ्योऽन्येषाम्
६१ दैष्टिकास्तिकनास्तिकाः
६२ शीलम्
६३ छत्रादेरञ्
६४ तूष्णीकः
६५ वृत्तोऽपपाठोऽनुयोगे
६६ बह्वच् पूर्वपदाट्ठः
६७ भक्षोऽस्मै हितम्
६८ नियुक्तं दीयते
६९ भक्तौदनाद्वाण् ठट्
७० श्राणामांसौदनाट्ठः
७१ नवयज्ञादयोऽस्मिन्वर्तन्ते
७२ तत्र नियुक्तः
७३ ठोऽगारान्तात्
७४ अध्यायिन्यदेशकालात्
७५ संस्थानप्रस्तारतदन्तकठिनान्तेषु व्यवहरति
७६ निकटादिषु वसति
७७ सतीर्थ्यः
७८ संख्यादेश्चार्हदलुचः
७९ गोदानादीनां ब्रह्मचर्ये
८० चन्द्रायणं च चरति

८१ देवव्रतादीन् डिन्
८२ डुवुश्चाष्टाचत्वारिंशच्चातु-
र्मास्यं यलुक्च
८३ तुरायणपारायणं यजमा-
नाधीयाने
८४ संशयं प्राप्ते ऽर्थे
८५ क्रोशयोजनाच्छताद्योजना-
च्चाभिगमार्हे
८६ तद्यात्येभ्यः
८७ पथष्टट्
८८ नित्यं णः पन्थश्च
८९ शङ्कूत्तराजवारिस्थलजङ्ग-
लकान्तारादिनाहृते च
९० स्थलादिना समधुकमरिचे
९१ योगादये शक्ते
९२ योग्यकार्मुके
९३ यज्ञानां दक्षिणायाम्
९४ तेषु देये
९५ काले कार्ये च भववत्
९६ व्युष्टादिष्वण्
९७ तेन हस्तयथाकथा चाद्यणम्
९८ संपादिनि
९९ कर्मवेषाद्यः
१०० कालात्परिजय्यलभ्यकार्य-
सुकरे
१०१ निर्वृत्ते
१०२ तस्मै भृतादिष्टे
१०३ तं भावि भूते च
१०४ षण्मासाण्ण्यठौ
१०५ समायाः खः

१०६ राज्यहस्संवत्सराच्च
द्विगोर्वा
१०७ वर्षादश्च
१०८ प्राणिनि भूते
१०९ मासाद्वयसि यः
११० खञ्च
१११ षण्मासाट्ण्यययाः
११२ सोऽस्य ब्रह्मचर्यतद्वतोः
११३ समयात्प्राप्तात्
११४ ऋत्वादिभ्योऽण्
११५ कालाद्यः
११६ दीर्घात्
११७ प्रयोजनम्
११८ एकागाराच्चौरे
११९ चूडादिभ्योऽण्
१२० विशाखाषाढान्मन्थदण्डे
१२१ उत्थापनादेष्ठः
१२२ विशिपदिरुहिपूरिसमापो-
ऽनात्सपूर्वपदात्
१२३ स्वर्गस्वस्तिवाचनादिभ्यो
यश्च्लुक्
१२४ आकालिकं ठश्चाद्यन्ते
१२५ त्रिंशद्विंशतेर्ड्वुरनाम्न्या-
र्हात्
१२६ सङ्ख्याडतेश्चाशत्तिष्टेः कः
१२७ अनादेश्शतादतस्मिन्यठौ
१२८ वातोष्ठः
१२९ सहस्रशतमानादण्
१३० कंसार्धाट्टट्
१३१ अर्धात्पलकंसकर्षात्

१३२ कार्षापणात्प्रतिश्चास्य वा
१३३ शूर्पादञ्
१३४ वसनात्
१३५ विंशतिकात्
१३६ द्विगोः खः
१३७ खारीकाकणीभ्यः कच्
१३८ माषपणपादाद्यः
१३९ शताद्वा
१४० शाणात्
१४१ द्वित्रेरण् च
१४२ अलुचो नाम्नि ष्लुक्
१४३ वाणः
१४४ सुवर्णकार्षापणात्
१४५ द्वित्रिबहोर्निष्कबिस्तात्
१४६ मूल्यैः क्रीते
१४७ तस्य वापे
१४८ वातपित्तश्लेष्मसन्निपाता-
च्छमनकोपने
१४९ हेतौ संयोगोत्पाते
१५० ठ्य ब्रह्मवर्चसाद्योऽसंख्या-
परिमाणाश्वादेः
१५१ पुत्राच्छयौ
१५२ पृथिवीसर्वभूमिभ्यामञ्
१५३ ईशे
१५४ ज्ञाते
१५५ लोकसर्वलोकात्
१५६ तदत्रास्मै वा वृद्ध्यायला-
भोपदाशुल्क देयम्
१५७ डदर्धाट्टः
१५८ भागाद्यठौ
१५९ वस्नांशभृत्यस्य
१६० मानम्
१६१ संख्यायाः संघसूत्रपाठे
१६२ नाम्नि
१६३ त्रैंशचात्वारिंशं
१६४ पञ्चद्दशद्वर्गे वा
१६५ स्तोमे डट्
१६६ तद्धरद्वहदावहत्सु वंशादे-
र्भारात्
१६७ वस्नद्रव्याट्ठकम्
१६८ पचत्यश्च द्रोणात्
१६९ संभवदवहरतोश्च
१७० पात्राढकाचितात्खो वा
१७१ द्विगोष्टट् खौ
१७२ श्लुक्च कुलिजात्
१७३ अर्हति
१७४ दण्डादियज्ञाद्यचम्
१७५ पात्रात्
१७६ कडङ्करदक्षिणास्थालीबि-
लाच्छयौ
१७७ शालीनकौपीनार्त्विजीनाः
१७८ छेदादेर्नित्यम्
१७९ वैरङ्गिकः
१८० शीर्षच्छेदाद्यो वा
१८१ यः
१८२ वहति रथयासङ्गात्
१८३ धुरो यढण्
१८४ वामाद्यादेः खः
१८५ अश्चैकादेः
१८६ शकटादण्

१८७ हलसीराट्ठण्
१८८ विध्यत्यनन्येन
१८९ धनगणं लब्धा
१९० णोऽन्नात्
१९१ पदमस्मिन्दृश्यम्
१९२ नौविषेण तार्यवध्ये
१९३ न्यायार्थादनपेते
१९४ मदस्य करणे
१९५ वश्यपथ्यवयस्यधेनुष्या-गार्हपत्यजन्यधर्म्यहृद्यमूल्यम्
१९६ तत्र साधौ
१९७ पथ्यतिथिवसतिस्वपतेर्ढण्
१९८ भक्ताण्णः
१९९ परिषदो ण्यश्च
२०० सर्वजनात्खञ्च
२०१ प्रतिजनादेः
२०२ कथादेष्ठण्
२०३ देवतान्तात् तदर्थे
२०४ पाद्यार्घ्ये
२०५ णोऽतिथेः
२०६ हलस्य सादेश्च कर्षे
२०७ सीतया सङ्गते
२०८ ठः
२०९ हविरन्नभेदापूपादेर्यो वा
२१० युगाद्योर्थैः
२११ शुन्यशून्योदन्यनभ्याः
२१२ कम्बलान्नाम्नि
२१३ तस्मै हितेऽराजाचार्यब्राह्मणवृष्णः
२१४ रथखलतिलयवमाषवृषब्रह्मप्राणयङ्गाद्यः
२१५ पथ्योऽजावेः
२१६ माणवचरकात्खञ्
२१७ भोगोत्तरपदात्मनभ्यां खः
२१८ पञ्चसर्वविश्वाज्जनात्कर्मधारयात्
२१९ सर्वमहतष्ठण्
२२० कर्वाणो वा
२२१ परिणामिनि तदर्थे
२२२ चर्मण्यञ्
२२३ ऋषभोपानहाञ्ञ्यः
२२४ छदिर्बलेर्ढण्
२२५ परिवारस्य स्यात्
२२६ अत्र च
२२७ तत्

---

इति शाकटायनीयसूत्रपाठे
तृतीयस्याध्यायस्य
द्वितीयः पादः ॥

---

तृतीयः पादः ।

१ तस्यार्हे क्रिये वत्
२ स्युप इवे
३ तत्र
४ तस्य
५ भावे त्वतल्
६ मात्क्रादगडुलादेः
७ नञ्तत्पुरुषादबुधादेः

८ पृथ्वादेर्वेमन्
९ वर्णदृढादिभ्यष्ट्यण् च
१० पतिराजान्तगुणाङ्गराजा-
दिभ्यः कृत्ये च
११ सहायाद्वा
१२ वयः प्राणिजातेरञ्
१३ युवादिहायनान्तादण्
१४ लघ्वादेरिकः
१५ हृदयपुरुषादसमासे
१६ सखिवणिग्दूताद्यः
१७ स्तेयार्हन्त्यश्रीत्रम्
१८ कपिज्ञातेर्ढण्
१९ योपान्त्याद्गुरूपोत्तमाद्वुञ्
२० द्वन्द्वचोरादेः
२१ गोत्रचरणाच्छ्लाघात्या-
कारावाये
२२ होत्राभ्यश्छः
२३ ब्रह्मणस्त्वः
२४ शाकटशाकिनौ क्षेत्रे
२५ धान्येभ्यः खञ्
२६ व्रीहिशालेर्ढण्
२७ यवयवकषष्टिकाद्यः
२८ वाणुमाषात्
२९ भङ्गोमातिलात्
३० रजस्यलाठवाप्य कटः
३१ गन्धेऽङ्गाश्वात्खञ्
३२ कुडाज्जल्पे
३३ तुल्ये कस्संज्ञाप्रतिकृत्योः
३४ न नृपूकार्थध्वजचित्रे
३५ जीवनेऽपण्ये
३६ देवपथादिभ्यः
३७ वस्तेर्ढञ्
३८ शिलाया ढश्च
३९ शाखादेर्यः
४० द्रोर्भव्ये
४१ कुशाग्राच्छः
४२ काकतालीयादयः
४३ शर्करादेरण्
४४ एकशालायाष्ठः
४५ गोधयादेश्च ठण्
४६ कर्कलोहितादीकश्च
४७ पील्वादेः कुणः पाके
४८ कर्णादिपक्षाज्जाहति मूले
४९ शीतोष्णातृप्रादसह आलुः
५० हिमादेलुस्सहे
५१ बलवातादूलः
५२ यथामुखसम्मुखाद्दर्शने खः
५३ सर्वादेःपथाङ्गकर्मपत्रपात्र-
शरावाद्व्यापिनि
५४ आप्रपदम्
५५ यथाकामानुकामात्यन्तपा-
रावारावारपारान्गामिनि
५६ अनुग्वलम्
५७ अध्वानं यखौ
५८ छश्चाभ्यमित्रम्
५९ परोवरीणपरम्परीणपुत्र-
पौत्रीणसर्वान्नीनायानयी-
नानुपदीनागवीनाद्यश्वी-
नाद्यप्रातीनसमांसमीन-
साप्तपदीनम्

६० तदस्य प्रमाणान्मात्रट्
६१ हस्तिपुरुषाद्वाण्
६२ वोर्ध्वं दघ्नट्द्वयसट्
६३ प्लुस्मानात्
६४ द्विगोस्संशये च
६५ मात्रट्
६६ शन्शद्विंशतेः
६७ डिन्
६८ यत्विदंकिमः
६९ एतदो वो घः
७० यत्तदः
७१ किमश्च संख्याया इतिश्च
७२ अवयवात्तयट्
७३ द्वित्रिभ्यां लुग्वा
७४ द्व्यादेर्गुणान्मूल्यक्रये मयट्
७५ अधिकमस्मिन्शतसहस्रे-
तत्संख्यं शतिशद्दशान्तादड्
७६ संख्यापूरणे डट्
७७ यतोरिथट्
७८ बहुगणपूगसङ्घात् तिथट्
७९ षट्कतिकतिपयात् थट्
८० चतुरः
८१ यछौ चस्यलुक्च
८२ विंशत्यादेस्तमड् वा
८३ शतादिमासार्धमाससंव-
त्सरात्
८४ षष्ट्यादेरनादेः
८५ नो मट्
८६ द्विवेस्तीयद्रेश्च ऋश्
८७ पूर्वमनेन सादेश्चेन
८८ इष्टादेः
८९ श्राद्धमद्यभुक्तं ठेनौ
९० क्षेत्रेऽन्यस्मिन्नाश्ये घः
९१ श्रोत्रियो वा छन्दोऽध्यायी
९२ इन्द्रियम्
९३ तेन वित्ते चञ्चुचणौ
९४ इतो ग्रन्थस्य ग्राहके
कश्चलुक्च
९५ ग्रहणाद्वा
९६ सस्यात् गुणात्परिजाते
९७ पार्श्वकायश्शूलिकदा-
ण्डाजिनिकानुपद्यन्वेष्टा
९८ धनहिरण्येऽभिलाषे
९९ स्वाङ्गेषु सक्ते
१०० उदरे ठगाद्यूने
१०१ कर्मठो घटः
१०२ अशं हारिणि
१०३ शीतकोष्णकौ कारिणि
१०४ तन्त्रान्नवोद्धृते
१०५ कमितर्यन्वभ्यभीभ्यः
१०६ विशालविशंकटविकटसङ्क-
टोत्कटप्रकटनिकटा-
वकटावकुटारावटीटाव-
नाटावभ्रटनिबिडनिबि-
रीसचिक्कचिकिनचिपिट
चिक्लपिल्लचुल्लोपत्याका-
धित्यकाः
१०७ तदस्मिन्प्रायोऽन्नं नाम्नि
१०८ कौल्मासीवटकिन्यौ
१०९ ब्राह्मणकोष्णिके

११० कालः प्रयोजनमस्य रोगे
१११ मुख्यः
११२ शृङ्खलकः करभे
११३ उन्मनस्युदुत्सोः
११४ सञ्जातं तारकादिभ्य इतः
११५ गर्भादप्राणिनि
११६ अस्त्यस्मिन्नेति मतुः
११७ आयात
११८ वातदन्तबलललाटादूलः
११९ प्राण्यङ्गादातो लः
१२० सिध्मादिरुक् क्षुद्रजन्तोः
१२१ प्रज्ञापर्णोदकफेनाल्लेलौ
१२२ काडाजटाघाटात् क्षेपे
१२३ वागालाटौ
१२४ ग्मिन्
१२५ मधुकृषिलोमपिच्छादिभ्यो
रवलशेलाः
१२६ नोऽङ्गादेः ।
१२७ शाकीपलालीदद्रुवा ह्रस्वश्च
१२८ विषुणलक्ष्मणौ
१२९ प्रज्ञाश्रद्धार्चावृत्तेर्णः
१३० ज्योत्स्नादिभ्योऽण्
१३१ शिकताशर्करात्
१३२ इलश्च देशे
१३३ द्युद्रोर्मः
१३४ काण्डाण्डभाण्डादीरः
१३५ कच्छ्वा डुरः
१३६ दन्त उन्नतः
१३७ मेधारथाद्वेरः
१३८ कृपाहृदयादालुः
१३९ केशाद्वः
१४० मण्यादिभ्यः
१४१ स्वाङ्गाद्धीनाद्
१४२ अभ्रादिभ्यः
१४३ शृङ्गादारकः
१४४ फलबर्हाच्चेनः
१४५ मलादीमसश्च
१४६ मरुत्पर्वणस्तः
१४७ बलितुण्डिवटेर्भः
१४८ कर्णाहंशुभमो युस्
१४९ कंशमस्तियुस्तुयस्तबभाः
१५० तपस्स्रग्मायामेधासो विन्
१५१ तमिस्रार्णवोर्जस्वलोर्जस्वि-
ज्ञामयाविन्गोमिन्
१५२ मौशिखादिभ्यां ठेनौ
१५३ व्रीह्याद्यतोऽनेकाचः
१५४ अशिरसोऽशीर्षश्च
१५५ अर्थार्थान्ताद्भावात्
१५६ व्रीहितुन्दादेरिलश्च
१५७ स्वाङ्गाद्विवृद्धात्
१५८ गुणादिभ्यो यः
१५९ रूपात् शस्ताहतात्
१६० गवादेष्टण्
१६१ निष्कादेश्शतसहस्रात्
१६२ एकादेः कर्मधारयात्
१६३ सर्वादेरिन्
१६४ द्वन्द्वरुग्निन्द्यात् प्राणिस्था-
दस्वाङ्गात्
१६५ वातातिसारपिशाचात्कश्च
१६६ वयसि इतः

१६७ सुखादेः
१६८ मालात् क्षेपे
१६९ धर्मशीलवर्णान्तात्
१७० वाहूर्वादेर्बलात्
१७१ मन्माब्जान्नाम्नि
१७२ हस्तदन्तकराज्जातौ
१७३ पुष्करादेर्देशे
१७४ वर्णी ब्रह्मचारी
१७५ सूक्तसाम्नि छः
१७६ श्लुग्वाध्यायानुवाके
१७७ विमुक्तादेरण्
१७८ घोषदादेर्वुञ् च
१७९ प्रकारे जातीयर्
१८० कोऽण्वादेः
१८१ कृष्णयवजीर्णसुरावदात-
गोमूत्रात्तिलव्रीहिशालय-
हिसुराच्छादने

इति श्रीशाकटायनीयसूत्रपाठे
तृतीयस्याध्यायस्य
तृतीयः पादः

—:०:—

चतुर्थः पादः ।

१ भूतपूर्वे चरट्
२ गोष्ठात्खञ्
३ षष्ठ्या रूप्यच्चरट्
४ व्याश्रये तस्
५ व्याधेः प्रतीकारे
६ पर्यभेस्सर्वोभये
७ आद्यादिभ्यः
८ क्षेपातिग्रहाव्यथे कर्तुस्तृ-
तीयायाः
९ पापहीयमानेन
१० पञ्चम्याः प्रतिना
११ अहीयरुहोऽपाये
१२ अद्व्यादिवैपुल्यात्सर्वादि-
किंबहोः प्तस्
१३ इतोऽतः कुतः
१४ भवदायुष्मद्दीर्घायुर्देवानां-
प्रियैकार्थात्
१५ त्रप् च [ १६ ककुत्रात्रेह
१७ सप्तम्याः
१८ किंयत्तत्सर्वैकान्यात्काले दा
१९ सदैतर्हि अधुनेदानींतदा-
नींसद्यः
२० परेद्यव्यह्नि
२१ पूर्वापराधरोत्तरान्यान्यत-
रेतरादेद्युस्
२२ उभयाद्युश्च
२३ परुत्परार्यैषमो वर्षे
२४ अनद्यतने र्हिः
२५ प्रकारे था
२६ कथमित्थमुः
२७ सङ्ख्याया धा
२८ विचाले च
२९ द्वैकाञ्ज्ध्यमुञ्
३० द्वित्रेर्धमेधौ
३१ तद्वति धण्
३२ वारे कृत्वस्
३३ चतुस्त्रिद्वि स्सुच्

३४ सकृत्
३५ बहोर्धासन्ने
३६ दिशो दिग्देशकाले तृतीयायुजः
३७ परावरात् स्तात्
३८ दक्षिणोत्तराच्चातस्
३९ अधराच्चात्
४० पश्चोऽपरस्य दिग्देशचाति
४१ वोत्तरपदेऽर्धे
४२ पुरः पुरस्तादवोऽवस्तादधोऽधस्तादुपर्युपरिष्टात्
४३ दक्षिणाद्वा पञ्चम्याः
४४ आहि दूरे
४५ उत्तरात्
४६ एनोऽदूरे
४७ लुगञ्चेः
४८ तीयशम्बबीजात्कृषौ कृञाडाच्
४९ सङ्ख्यादेर्गुणात्
५० सपत्रनिष्पत्रादतिपीडने
५१ भद्रमद्रान्मुण्डने
५२ प्रियसुखादानुकूल्ये
५३ दुःखनिष्कुलशूलसमयसत्यात्प्रातिकूल्यनिष्कोषपापयापनाशपथे
५४ अनेकाचोऽव्यक्तानुकरणात्कृभ्वस्तिभ्यां द्विश्च
५५ कर्मकर्तृभ्यां प्रागतत्त्वे च्विः
५६ चेतोमनोरहोरजोऽरुश्चसुपो लुक् च्वौ
५७ इसुसोर्बहुलं
५८ ईश्च्वः
५९ व्याप्तौ सात्
६० जातेस्सम्पदा च
६१ तत्राधीने
६२ देये त्रा च
६३ देवादिभ्यः सप्तमी द्वितीयात्
६४ बहुल्पार्थात्कारकाच्छसीष्टानिष्टे
६५ सङ्ख्यैकाद्वीप्सायाम्
६६ सङ्ख्यादेः पादादिभ्यो दानदण्डे च वुच्लुक्च
६७ प्रकृते मयट्
६८ अस्मिन्
६९ तयोस्समूहवच्च बहुषु
७० निन्द्ये पाशप्
७१ लिङश्च प्रकृष्टे तमप्
७२ द्वयोर्विभज्ये च तरप्
७३ तौ ङः
७४ अव्ययैत्किंतिङोऽमरवे तयोर्डाम्
७५ गुणाङ्गाद्वेष्ठेयसू
७६ प्रशस्ते रूपप्
७७ ईषदसमाप्ते ङादेः कल्पच्देश्यच्देशीयर्
७८ सुपः प्राग्बहुर्वा
७९ न ङादेः कपोऽच्छिन्नादिभ्यः
८० अनत्यन्ते
८१ प्राक्कालकप्

८२ तिङ्सर्वादेरक्षवन्त्यात्पूर्वोऽक्
८३ युष्मदस्मदोस्सुपोऽसोभि
८४ को दिश्चाठ्ययस्य
८५ तूष्णीकाम्
८६ कुत्सिताल्पाज्ञाते
८७ अनुकम्पातन्नीत्योः
८८ बह्वचो नृनाम्नोऽजातेष्ठः घेला वा
८९ वुजधौ चोपादेः
९० उकोऽचो लुक्प्रकृत्या च
९१ श्लुच्युत्तरपदस्य च्कन्
९२ श्लुकचाजिनात्
९३ अषडेकाच्पूर्वपदस्याचि
९४ द्वितीयादचः
९५ तेनैचः
९६ शेवलसुपरिविशालवरुणार्यमादेस्तृतीयात्
९७ क्वचित्तुर्यात्
९८ पूर्वपदस्य वा
९९ ह्रस्वे
१०० कुटीशुण्डाद्रः
१०१ शम्या रुरौ
१०२ कुतुपः
१०३ कासूगोण्याः ष्टरट्
१०४ वत्सोक्षर्षभाश्वाद् ह्रासे
१०५ यत्तत्किमन्याद्द्वयोर्निर्धार्ये डतरः
१०६ वैकात्
१०७ बहूनां प्रश्ने डतमश्च
१०८ एकात्
१०९ क्ताद् ङादेश्चानत्यन्ते
११० न सामि वचने
१११ लोहितान्मणौ कः
११२ रक्तानित्यवर्णयोः कालाच्च
११३ शीतोष्णाद्वृतौ
११४ लूनवियातात्पशौ
११५ तनुपुत्राणुस्नातबृहतीशून्यात्सूत्रकृत्रिमनिपुणस्नानाच्छादनरिक्ते
११६ कुमारीक्रीडनेयोऽव्यादिभ्यः
११७ तीयाट्टीकण्विद्यायाम्
११८ ओऽष्टमाद्भागे
११९ षष्ठात्
१२० माने कश्च
१२१ एकादाकिंश्चासहाये
१२२ तिलात्पिञ्जपेजौ निष्फले
१२३ मृदस्तिकः
१२४ सस्नौ प्रशस्ते
१२५ बहुणञ्जलोर्द्ध्वयसट्मात्रट्
१२६ वर्णात्कारः
१२७ भेषजातिहोत्रादेर्भ्यष्ट्यण्ठलल्
१२८ नामरूपभागाद्धेयः
१२९ मर्तादिभ्यो यः
१३० नवात्तनतनखञ्च नू च
१३१ प्रात्पुराणे
१३२ प्रज्ञादिभ्योऽण्
१३३ कृष्णौषधिश्रोत्रान्मृगभेषजशरीरे

१३४ कर्मणस्सन्दिष्टे
१३५ वाच्छण्
१३६ विनयादिभ्यः
१३७ औपयिकम्
१३८ अनुगादिनः
१३९ अजिनोऽण्
१४० विसारिणो मत्स्ये
१४१ ब्रिज्योऽमुख्यकात्पूगात्
१४२ व्रातञ्फादस्त्रियाम्
१४३ शस्त्रजीविसघाद् ञ्यड् वा
१४४ वाहीकेष्वब्राह्मणराज-न्येभ्यः
१४५ दामनीयौधेयपर्श्वादिवृका-च्छाञण् टेन्यण्
१४६ श्रौशनीशिखाशालोर्णाम-त्वभिजिद्विदभृतो गोत्रेणो यञ्

---

इति श्रीशाकटायनीयसूत्रपाठे तृतीयस्याध्यायस्य चतुर्थः पादः

—:o:—

समाप्तश्च तृतीयाध्यायः



प्रथमः पादः ।

१ गुप्तौधूपविच्छिपणिपनेरायः
२ कमृतेर्णिङीयङ्
३ नित्यास्त्वशपि
४ कितिजगुपेभिंषज्यादिद्यमा-निभ्यो सन्
५ शान्दान्मान्वधाक्षिशाना-र्जवा अभ्यासात्वैरूप्य इचै:
६ धातोः कण्ड्वादेर्यक्
७ चुरादिभ्यो णिच्
८ युजादेर्वा
९ भुवेः प्राप्ताविणिः
१० अत्याद्येकाजहलादिभ्योऽ रुचिशुभिभ्यां भृशाभी-क्ष्ण्ये यङ्
११ गलुम्पसद्दहजपचभचदंशगत्य र्थाभ्यां गर्ह्यकुटिलयोः
१२ लुग्बहुलम्
१३ अचि
१४ नोऽनः
१५ प्रयुज्याप्याणिङ्वा
१६ कर्म्येककर्तृकात्मन्नतत्सनः
१७ सुपः कर्तुः काम्यः
१८ क्यच्चामाव्ययात्
१९ गौणादाधाराच्चाचरि
२० कर्तुः क्विप्
२१ गल्भक्लीवहोढाण्ङित्
२२ क्यङ्
२३ तद्वत्योजसः
२४ सो वा लुक्च

२५ अप्सरसः
२६ भृशादेश्च्वौ स्तः
२७ निद्रादिहाज्भ्यो धर्मणि क्यष्
२८ णिङ्बहुलं कृञादिषु
२९ श्वेताश्वाश्वतरगालोडितह्वारकस्याश्वतरेतकलुक्च
३० हलिकल्योरः
३१ सत्यार्थवेदस्याः
३२ निरस्यङ्गेभ्यः कर्मणो णिङ्
३३ पुच्छभाण्डादस्समाचौः
३४ चीवरात्परिधाज्र्योः
३५ सत्रकक्षकष्टकृच्छ्रगहनात्पापेचिकीर्षौ क्यङ्
३६ वाष्पोष्मफेनादुद्वमि
३७ सुखादेर्भुजि
३८ शब्दादेः कृञि वा
३९ रोमन्थादुच्चर्वणे
४० नमोवरिवस्तपसः क्यच्
४१ चित्रङो विस्मये
४२ ह्रस्वस्य तक् पिति किति
४३ द्विर्धातुः श्लुङ्लिङ्ङे प्रत्यये प्राक्क्त्वयचः
४४ आद्यो काच्
४५ सन्यङश्च
४६ सुपः
४७ नाद्यच्
४८ ततः
४९ नवन्द्रा वलि
५० द्विरेकेषाम्
५१ यकस्तृतीयः
५२ ईर्ष्यः
५३ सन्वा
५४ चरिचलपतिवदोऽचि
५५ घनाघनपटूपटम्
५६ चिक्लिदचक्नसदाश्वत्साहून्मीढवत्
५७ सीधीपज्ञीप् सन्यूधाऽज्ञपेर्न च
५८ धिप्धीप् दम्भः
५९ वौन्मुचोऽनाप्येऽचः
६० घुमीमारभलभशक्पत्पदामिस्
६१ राधेर्वधे
६२ लिटीडप्येत्
६३ त्रप्फलिभजत्रफट्क्रज्हादिदद्दिशसिकृतस्यातोऽन्तर्हलोः
६४ फणादिजॄत्रस्भ्रम्वमां वा
६५ श्रन्थग्रन्थोर्न्लुश्च
६६ दम्भः
६७ थे वा
६८ घोर्हि
६९ देर्लिटीगिः
७० पिबस्येण्ङे
७१ हिघ्नोऽङे कुः पूर्वात्
७२ जेर्लिट्सनि
७३ चेर्वा
७४ सञ्जेष्विषच्यणि
७५ न स्विदिस्वदिसह्यणिस्तोः
७६ पूर्वस्यास्वेऽचीयुण्योः

७७ आयकभ्रज्भष:
७८ द्युतेरिः
७९ खरश्चर्
८० ष्ठिवेष्टोवा
८१ लुक्खयि
८२ हलोऽनादेः
८३ अठ्याक्
८४ कुहोश्चुः
८५ यङोऽकवतेः
८६ ऐङमिदाहाकोः
८७ वन्चस्रन्सध्वन्सभ्रन्शक-
स्पत्पदिस्कन्दान्नीम्
८८ अतोऽनुनासिकस्य मम्
८९ जठजभदहदशभञ्जपसाम्
९० चर्फलाम्
९१ ति चातोल्युत्
९२ रीमृत्वताम् ।
९३ रम् रिम् च श्लुवि
९४ निजामेत्
९५ पृभृब्राङ्माङामित्
९६ सन्यतः
९७ ओः पुयञ्ज्ये
९८ श्रुस्रुद्रुप्रुप्लुच्योर्वा
९९ स्वपेर्णावुः
१०० सन्वल्लघौ ङेऽनग्लुचि
१०१ लघोर्दीर्घोऽनजादेः
१०२ स्मृदत्वरप्रथम्रदस्तृस्पशोऽत्
१०३ वेष्टि चेष्टो वा
१०४ गणश्चेः
१०५ लिख्यादादेरतः
१०६ नकचाश्न्वृदाद्यनेकहलः
१०७ भूठ्यधोऽदित्
१०८ हृग्यजस्साचेऽर्याज्यम्
१०९ न वः
११० वा
१११ टये च
११२ ज्यः
११३ व्यः
११४ परेर्वा
११५ ग्रठ्यादिस्वठवचः किति
११६ वशिठ्यचिव्यधिज्याग्रहिव्र-
श्चिप्रच्छिभ्रज्जां क्ङिति
११७ स्वापेर्ङे
११८ वशो न यङि
११९ स्वठ्यास्यमः
१२० चायः की
१२१ द्व्युक्तौ हुः
१२२ णौ मन्ङे
१२३ श्वेर्वा
१२४ लिङ्यङि
१२५ न
१२६ प्यायः
१२७ क्योरनुपसर्गस्य
१२८ आङोऽन्धूधसोः
१२९ स्फायः
१३० स्त्यः प्रपूर्वस्य
१३१ द्रवमूर्तौ श्यः
१३२ प्रतेः
१३३ वाभ्यवपूर्वस्य
१३४ शृतं पक्वे हविः क्षीरे

१३५ दीर्घोऽचोऽवः
१३६ क्विजलि क्ङित्यनुनासिके
१३७ सनि
१३८ इहनः
१३९ तनो वा
१४० क्रमस्त्वि
१४१ शूच्छ्वोऽनुनासिके च
१४२ त्वज्वर्मव्यविस्त्रिवोऽवश्च
१४३ राल्लुक्
१४४ गाङ्कुटां ङिद्वदञ्णि
१४५ इटि विजः
१४६ वोर्णोः
१४७ श्ल्यव्लौ
१४८ किद्वृक्षिटीन्धेश्चासंयोगात्
१४९ स्वञ्जेर्वा
१५० नशजस्ति त्वि न्युपान्त्ये
१५१ थफवञ्चिलुञ्च्यृतितृषिमृषि
कृश इाट
१५२ यौ हलादेरलस्संस्त्वोः
१५३ उति शपः क्त्वोर्भावारम्भे
१५४ शीङ्डीङ्पूङ्स्विद्मिदिक्ष्वि
धृषो भ
१५५ मृषः क्षान्तौ
१५६ त्वि
१५७ स्कन्दस्यन्दः
१५८ मृड्मृद्गुधकुषक्लिशवद्वसः
१५९ रुद्विन्मुषग्रहिस्वप्प्रच्छां
सनि च
१६० सीकः
१६१ हलि

१६२ सिलौ तङि
१६३ उः
१६४ गमो वा
१६५ यमस्सौ विवाहे
१६६ गन्धने
१६७ घ्नः
१६८ घुन्धोरि च
१६९ अन्त्योपान्त्यतामिर्
१७० पुवाद्रुर्
१७१ क्तेऽनिट्चजः कुर्घिति:
१७२ वाक्यार्चनिदोवघदाचं
नाम्नि
१७३ उद्गादयः
१७४ न गतौ वञ्चः
१७५ याजादयो यज्ञाङ्गे
१७६ ण्यगयावश्यके
१७७ निप्राद्युजः शक्ति
१७८ भुजोऽन्नै
१७९ त्यजयजः
१८० एचोऽश्याः
१८१ व्योऽलिटि
१८२ स्फुरस्फुलोर्घञि
१८३ अभ्यपगुरो वा
१८४ डीङस्सनि
१८५ प्याक् ङि
१८६ मिञ्मीञोरखाचि
१८७ लीङ्लिनात्योर्वा
१८८ पूजाप्रलम्भाभिभवे णौ
१८९ क्रोङ्जेः
१९० सिध्यतेरज्ञाने

१९१ प्रयोक्तुस्मिङः
१९२ बिभेतेर्भीष च
१९३ चिस्फुरोर्वा
१९४ वेतेः प्रजने
१९५ लीलोर्नल्लुक् स्नेहद्रवे
१९६ रुहः पः
१९७ कथादिपातिस्फायोऽल-
क्षम्
१९८ प्रीङ्धूञोर्नक्
१९९ वाशद्योर्विधूननागत्योर्जक्तौ
२०० वेव्यापाह्वाशाच्छासो यिक्
२०१ ह्रीव्लीरीक्नूयीक्ष्मायत्यां
तां पक्
२०२ घटादिकगेवनूजनैङ्जृक्नन-
सूरञ्जयमोऽकमिचम्यस्यप-
परिस्खद उपान्त्यस्याचोऽ
णञ्जौ तु दीर्घो वा
२०३ शमोऽदर्शने
२०४ यमोऽपरिवेषे णिचि च
२०५ मारणतोषणनिशाने ज्ञश्च
२०६ चहः शाठ्ये
२०७ वानुपसर्गाज्ज्वलह्वलह्मल-
वनूवमनमग्लास्नाम्
२०८ खचि
२०९ छदेर्मन्क्वौ
२१० घेऽद्वयाद्युपसर्गस्य
२११ ङेऽशास्वस्नाशृदितः
२१२ भ्राजभासभाषदीपपीडमील्
जीवकणरणश्रण् ह्वलुटां वा
२१५ वृत्
२१४ जिघ्रतेरिः
२१५ तिष्ठतेः
२१६ ऊद्दुषो णौ
२१७ चित्ते वा
२१८ लुङ्लिटि भुवः
२१९ गोहोऽचि
२२० गम्हन्जन्खन्घसोऽनङ्य-
चिलुविक्ङति
२२१ हलो नोऽनर्चाञ्च्युदितः
२२२ लङ्गिकम्प्योरुपतापाङ्गवि-
कृत्योः
२२३ भञ्जेर्ञौ वा
२२४ दन्शसञ्जस्वञ्जः शपि
२२५ रञ्जः
२२६ णौ मृगरमणे
२२७ घञि भावकरणे
२२८ स्यदो जवे
२२९ प्रश्रथहिमश्रथैधावोदौद्म-
दशनम्
२३० ञ्णित्यस्याः
२३१ जागुर्ञ्णि
२३२ मृजः
२३३ आवोचि
२३४ विश्रमो घञि
२३५ नोद्यमोपरमः
२३६ मजन्वधोऽयरंनंगंवंकंचमः
कञ्जौ
२३७ आतो यम्
२३८ हनो नस्तोऽञ्जिणे
२३९ हो घः

२४० शासः ङ्कित्यङ्हलोत्
२४१ क्वौ
२४२ आङः
२४३ क्विन्यपचायः
२४४ ह्लादोऽक्ति:
२४५ ऋल्वादेः क्तक्तिनां नोऽम्रः
२४६ क्तयोर्द्रश्यौदित्सूयत्यादेर्दस्य चामन्मूर्च्छः
२४७ हलो यञ आतोऽध्याख्यः
२४८ घादिठयञ्ञ्नोशाजिगीषापादाने
२४९ सेः कर्मकर्तरि ग्रासे
२५० निर्वाणोऽवाते
२५१ दुग्वोर्दीर्घश्च
२५२ क्षेरघ्ये
२५३ दैन्याक्रोशे वा
२५४ ह्रीत्राद्राघ्रोन्दनुद्विन्तेः
२५५ प्रस्त्यो मः
२५६ क्षः
२५७ शुष्पचः कम्
२५८ अनुपसर्गाः क्षीबोल्लाघकृशपरिकृशफुल्लोत्फुल्लसम्फुल्लाः
२५९ भित्तं शकलम्
२६० वित्तं धनप्रतीतम्
२६१ हन्मन्यरंगनं वनतितनादेर्लुग्जलि
२६२ ण्ये
२६३ मो वा
२६४ गमादीनां क्वौ
२६५ न क्वौ दीर्घश्च
२६६ वन्यनुनासिकस्याः
२६७ जन्सन्खनाम्
२६८ सनि
२६९ ये वा
२७० तनो यकि
२७१ सनस्तौ क्वौ

---

इति शाकटायनीयसूत्रपाठे
चतुर्थस्याध्यायस्य
प्रथमः पादः ॥

---

द्वितीयः पादः ।

१ हृणोऽचीकश्श्लेले यञ्
२ वेकः
३ एश्शीङः
४ रयप्
५ उपसर्गादुदूहः
६ ल्येतेरित्
७ श्वयत्यस्वतोऽङयथगुस्फम्
८ नशो वेम्
९ ऋदृशोऽर्
१० जागुः किति
११ शृदृप्रां लिटय् वा
१२ स्कृच्छृतः
१३ हल्भ्याम् ऋदृतेः
१४ यङ्यक्क्याशे
१५ रिः
१६ जुस्पक्येङर्
१७ अङ्क्रिस्मृग्धेती
१८ हस्वस्य हलः

१९ छ्वु क्नोर्नाचि ऊपठौ
२० भूस्वोऽङ्के:
२१ हल्योरीत्
२२ वोणोंः
२३ अव्योत्
२४ तृणेह्
२५ भ्रुव इट्
२६ यङ्तुरुस्तोर्बहुलम्
२७ स्यस्तेस्सोऽलः
२८ अदोऽट्
२९ ईट् चाजदरुद्रुयः
३० वल इट्
३१ ईशीङ्भ्यां स्ध्वे
३२ जल्होर्हौ धिः
३३ शाध्येधिजहि
३  अभ्यऽयतः
३५ इच्यः
३६ आतोऽपः
३७ श्लुगुषि
३८ जेः
३९ अतो हः
४० असंयोगाद्धोः
४१ म्वि लुग्वा
४२ कुर्यि च
४३ अतश्शि चोत्
४४ मगाने
४५ आसीनः
४६ नमस्त्योर्लुक्
४७ श्नाज्भेरातः
४८ हल्यघोरीः
४९ इद्दरिद्रः
५० भ्यो वा
५१ हाकः
५२ आ च हौ
५३ यि लुक्
५४ कमस्याचि
५५ दुहदिहलिहगुहस्तङि
तुवि श्लुग्वा
५६ ओतश्श्ये
५७ यक्गमिषोश्शि च्छः
५८ पाघ्राध्मास्थाम्नादाण्दृश्य-
र्तिश्रौतिधिन्वुकृण्वुशदसदः
पिबजिघ्रधमतिष्ठमनयच्छ-
पश्यर्च्छशृधिकृशीयसीदम्
५९ सर्तेर्धौ वेगे
६० ज्ञाजनो जाः
६१ एद्धिदोऽकः
६२ ष्ठां ह्रस्वः
६३ शमां दीर्घोऽष्टानाम्
६४ ष्ठिवूक्लम्वाचमः
६५ क्रमोऽतङ्गाने
६६ सावार्द्धे च:
६७ हलाम्
६८ वद्व्रज्लोऽतः
६९ वोर्णुञ्हलादेर्लघोरिटि
७० न क्षण्श्वसि श्विजाग्रेदि-
न्मक्ष्यश्च
७१ चूञ्रुस्तुभ्य इट्
७२ यरंनमातां सक्च
७३ घुपाभूस्थैतेश्श्लुक

७४ घ्राधेट्शाच्छासो वा
७५ तन्भ्यस्यास्ते
७६ णल्ह्रस्वाल्लुकस्तौ
७७ ईटीट:
७८ धि वा
७९ तासस्त्योस्तित्र
८० एति ह:
८१ तस्सि लयशिल
८२ ध्या ह्व:
८३ डीङो यिक्ङिस्यचि
८४ इटि चातो लुक्
८५ हल्भ्यां लिङ्येद्वा
८६ घुमास्थागापाहाकस:
८७ ईहल्यच्ये
८८ ये
८९ घ्राध्मोर्यङि
९० घ्रो घ्नी हिंसायाम्
९१ अस्तिब्रुवोर्भूवचौ
९२ चक्ष: ख्शाञ् वाचि
९३ लिटि वा
९४ शो य:
९५ भ्रस्जग्रोऽर्
९६ लुङि लुग्दरिद्र:
९७ अस्मन्वुरावने
९८ हलो य:
९९ क्यो वा
१०० अत:
१०१ णेरिक्तानिडामात्वन्तेत्
स्वाद्ये
१०२ दान्तशान्तपूर्णदस्तस्पष्ट,
छन्नज्ञप्तावा
१०३ लघोर्हल: ण्येऽय्
१०४ वाम्रो:
१०५ व मेड:
१०६ क्षेरी:
१०७ क्षय्यजय्यौ शक्तौ
१०८ क्रय्य: क्रयार्थे
१०९ दोसोमास्थां क्ति
११० शोव्रते
१११ छश्च वा
११२ दद्घोर्द:
११३ श्नोऽच उपसर्गात्
११४ प्राद्दाञस्ते वारम्भे
११५ निविस्वन्वात्
११६ धाञो हि:
११७ हाकस्त्विव
११८ जग्धद: ण्ये च
११९ घस्लज्घस्लुङ् सनि
१२० लिटि वा
१२१ वेर्वय्
१२२ घ्नो वधस्तङि लुङि
१२३ लिङि च
१२४ गैत्यो:
१२५ णौ गमज्ञाने
१२६ सनीङश्च
१२७ गाङ् लिटि
१२८ लुङ्लृङ्णौ सन्ङे वा
१२९ वलनेऽचो वि
१३० अकयब्घञ्चि
१३१ लङ्लुङ्लृङ्यमाङाट्

१३२ आरैगाद्यचः
१३३ यसः
१३४ वलादेरिडस्युणादेः
१३५ तेर्ग्रहादिभ्यः
१३६ ग्रह एकाचोऽलिटीटः
१३७ ऋद्द्वुर्णालतङ्सेः
१३८ हलभ्यां चोस्मट् तङ् से:
१३९ राधाद्योरिङ्गूञः
१४० अञ्जोऽसेः
१४१ निष्कुषः
१४२ क्त्योः
१४३ नञीयश्ठ्यैदिद्धे टोऽपतः
१४४ अर्देस्सन्निवेः
१४५ अविदूरेऽभेः
१४६ शसिकषः प्रगल्भे
१४७ कषः कृच्छ्रगहने
१४८ घुषोऽविशब्दे
१४९ दृढ स्थूलबलिनोः
१५० क्षुब्धस्वान्तध्वान्तपरिवृढ,
लग्नम्लिष्टविरिब्धफाण्ट,
मन्थमनस्तमः प्रभुसक्ता
स्पष्टस्वरानायासभृशे
१५१ आदितः
१५२ भावारम्भे वा
१५३ शकेः कर्मणि
१५४ हृषेर्लोमविस्मयप्रतिघाते
१५५ ज्ञप्तप्रवस्तापचितम्
१५६ वमरुष्यमत्वरसंघुषास्वनः
१५७ जृव्रश्चास्त्वि
१५८ क्तक्त्वोः क्षुधवसः
१५९ लुभ्यञ्चेर्विमोहार्चे
१६० पूङ्क्लिशो वा
१६१ स्व्यूदितः
१६२ सहलुभेच्छरुषरिषास्ति
१६३ भ्रस्जृधदम्भतन्मन्पतिश्रि
पिभ्रियूर्णुभरस्वृज्ञि
वृतस्नान
१६४ आद्यपूङ्स्मयञ्जसः
१६५ न किदाद्युग्ग्रहगुहः
१६६ ऋद्धनस्स्ये
१६७ कृस्यैकाचपः
१६८ गमहन्विद्दृशिवशो वा
१६९ कृतृनृचृच्छृदस्स्यसौ
१७० गमः
१७१ अतङः
१७२ न वृद्भ्यः
१७३ गंस्नोरसुमङाने
१७४ क्रमः
१७५ तुः
१७६ शक्प्रच्छिश्चिन्द्रुग्रहस्वसि-
घस्वोऽशिवश्रिशीङ्डीङ्-
रुषट् को द्रवनः
१७७ मुरिभिविश्ववाच्चः
१७८ अस्मरस्तुयुयविनित्यमु
रुभाज्जः
१७९ रभमस्वान्नशः
१८० अक्षुनुतुस्कन्दिमच्छिखिश-
पसहाद्दः
१८१ वन्नासायुद्धुक्षुरक्षुवाद्धः
१८२ आबलिलुविकुस्तृस्वतिश-

तात्परः
१८३ यरलाद्वः
१८४ रयनगान्मः
१८५ दन्दृलिविस्पृमृदिरुक्षुरेश्शः
१८६ शिशुद्धित्विकर्पिवितुदोष्ठषः
१८७ वनमिदुरुदिलिदाद् हः
१८८ स्विद्यम्निधिशिलविपुष-
श्ष्यात्
१८९ कित्युक्श्यूगुं जः
१९० नित्यानिट्नासोऽत्वदृक्षुं
जूद्वशस्थे वावृठ्यात्तेः
१९१ ऋतः
१९२ कृञोऽसः
१९३ स्मृवृस्तुद्रुस्नुस्रोश्च लिटि
१९४ स्वजूशोऽम् जल्यक्ति
१९५ दृपृतृपस्पृकृषिस्पृश्मृशो वा
१९६ नशमस्जसोर्नम्
१९७ उदितः
१९८ लिपादित्रफहफगुफोभग्नुं
भषो
१९९ जभोऽचि
२०० रधः
२०१ नेट्यलिटि
२०२ रभः
२०३ लभः
२०४ च्याङः
२०५ स्तुतावुपात्
२०६ ञ्यमि वा
२०७ घञखे चोपसर्गात्
२०८ सुदुर्भ्यं

२०९ क्रीडन्तव्यवस्यादेलुं गबहुलम्
२१० घाञ्नत्युपेः
२११ संपर्युपात्कृञस्सङ्भूषसं
मवाये
२१२ उपाद्विकारप्रतियत्नवाक्या
ध्याहारे
२१३ किरतेर्लवने
२१४ प्रतेश्च वधे
२१५ चतुष्पच्चपाद्वर्षात्
२१६ श्रिशुनि भक्षाश्रयाय
२१७ वौ विष्किरो वा
२१८ प्रात्तुम्पगवि
२१९ प्रादुपश्चाच्यस्तेष्विषः
२२० सूड्सूमोस्तुस्तुभोऽटयप्यद्वे
२२१ स्यासेनिसेधसिच्सञ्जां
द्व्यटि
२२२ स्तम्भोऽङप्रतिस्तठ्यनि,
स्तब्धे
२२३ अवाच्चालम्बनाविदूर्यो क्षु
२२४ वेश्च स्वनोऽशने
२२५ सदोऽप्रनेर्लौ स्यादेः
२२६ स्वञ्जेश्च
२२७ परिनिवेस्सेवः
२२८ सयसिते
२२९ सट्स्तुस्वञ्जां वा त्वटि
२३० सीवूसहोऽङेऽसो:
२३१ स्यन्दतेर्वाभ्यनोश्चाप्रा
णिनि
२३२ वेस्स्कन्दोऽक्तयोः
२३३ परे

२३४ स्फुरस्फुलोर्निर्नैः
२३५ वेः
२३६ स्कम्भः
२५७ निर्दुःस्तुवेःसमसूतिस्व-
पोऽवः
२३८ हिनुमीनानिशोऽदुरोऽ-
न्तरश्च णः
२३९ शः
२४० नेर्गुमानद्रुपतपदिस्यति,
यातिवातिद्रातिप्साति
हन्तिवपिवहिशमचि-
नुदेग्धौ
२४१ शेषेऽषान्तकखपाठे वा
२४२ परेरनितेः
२४३ अन्ते च
२४४ ह्वयेः
२४५ ग्नः
२४६ क्वि वा
२४७ न देशेऽन्तरोऽयनघ्नः
२४८ निसनिक्षनिन्दः कृति वा
२४९ अषोऽचोऽस्त्राभूपूस्त्रकंगंप्या,
यिवेपः
२५० नमीजादेरेव
२५१ हृणिलिजुपान्त्याद्वा
२५२ निर्विंशणः
२५३ रो लोऽयौ
२५४ निष्प्रतेर्वा
२५५ परेर्घाङ्क्योगे
२५६ हृश्वार्एडादीनाम्
२५७ ग्रोऽचि
२५८ यङि
२५९ गरगलं विषप्रायणे
२६० कृपोऽकृपीटादिषु
२६१ आदेच्छ्णोऽच्वक्लृप्त्याशीव-
त्सम्

---

इति शाकटायनीयसूत्रपाठे
चतुर्थस्याध्यायस्य
द्वितीयः पादः

---

तृतीयः पादः

१ नाम्स्यौ लुप्तौ
२ मिलुङि
३ दृपादेर्वासृपः
४ ह्कश्शलोऽदृशः क्सौ नेट्
चेत्
५ श्लिषः
६ नानालिंगने
७ कंश्रिद्रुस्रुणोर्ङः कर्तरि
८ धेट्श्वेर्वा
९ स्तम्भूम्रुच्म्लुचूग्रुचूग्लुचू-
ग्लुञ्चु श्विजॄऽङ्
१० ऋदितोऽनङि
११ सर्तिशास्तिलिदद्युत्पुष्यादेः
१२ वक्त्यसूख्यातेः
१३ लिपिसिचूह्वाऽर्तेः
१४ तङि वा
१५ दीप्पूर्जन्वुधतायूप्याय-
स्ते जिः
१६ पदः

१७ कर्मभावे
१८ कुन्दूशिग्रहकृम्भस्सितास्थु-सटां ञिड्वा
१९ श्लेले यक्
२० कर्तरि शप्
२१ हादादेश्श्लुब् लुक्
२२ दिवादेश्श्य:
२३ भ्राशभ्लाशभ्रमिक्रमित्रसि-त्रुटिलषो वा
२४ यसोऽनुपसर्गात्
२५ सम:
२६ अक्षश्श्नु:
२७ तक्षस्तनूकृतौ
२८ स्वादे:
२९ स्तम्भूस्तुम्भूस्कम्भूस्कुम्भू-स्कोश्श्ना च
३० क्र्यादे:
३१ हलश्श्नो ह्वावान:
३२ तुदृभ्यश्श:
३३ कृत्स्तनादेरु:
३४ रुधां नं ल्लुक् च
३५ कर्मण्यस्नुवादीनां कर्मवञ्जि
३६ तपस्तपसि
३७ सृजश्श्राद्धे
३८ करणे क्वचित्
३९ कुषिरजश्श्याक्न वा
४० ऽयञ्दुह:
४१ रुध:
४२ तपोऽनुतापे च
४३ णिश्रिस्नुतङ् कर्मण:
४४ भूषार्थसन्दुहादीनां च ञियक्
४५ कल्पोऽतुन्त्वाम्
४६ पुरकेलिमकृष्टपच्यं कर्मणि
४७ सङ्गतेऽजर्यम्
४८ रुच्याऽव्यथ्यौ
४९ भूगोयो वा
५० प्रब्रूवस्योऽनीय:
५१ जनाप्लवापतो घ्यण्
५२ श्लिषशीङ्स्थाजॄषास्वसज-न्रुहारम्भात् क्त:
५३ गत्यकर्मण्याधारे च
५४ आदौ
५५ स्वाप्यानाप्याल्लक्ष्यपूखा-र्थाः कर्मभावे
५६ भीमादयोऽपादाने
५७ सम्प्रदानाच्चान्यत्रोणादय:
५८ कृद्बहुलम्
५९ प्राक्क्त्रि प्राप्तौऽसन:
६० घ्यण्
६१ पाणिसमवात् सृज:
६२ ओरावश्यके
६३ वाधारेऽमावास्या
६४ कुण्डपाय्यसञ्चाय्यराज-सूया: क्रतौ
६५ पाय्यधाय्यसान्नाय्यनि-काय्यप्रणाय्यानाय्यं माना-र्घविनिवाससंमत्यनित्ये
६६ अग्नौ परिचाय्योपचाय्य-समूह्यचित्या:

११६ आशिषि हनः
११७ क्लेशतमसोऽपे
११८ शीर्षकुमाराणिन्
११९ अमनुष्ये टक्
१२० जायापतेर्लक्षणे
१२१ हस्तिकवाटाच्छक्तौ
१२२ राजघः
१२३ अह्नोऽः
१२४ शक्तिलाङ्गलाङ्कुशयष्टितो-
मरघनुर्घटाद्ग्रहः
१२५ सूत्राद्धारणे
१२६ हृञो वयोऽनुद्यमे
१२७ आङि शीले
१२८ दृतिनाथात्पशाविः
१२९ फलेग्रह्यात्मंभरिकुक्षिंभरि
१३० शकृत्स्तम्बाद्वत्सव्रीहौ कृञः
१३१ किंयत्तद्बहोरः
१३२ दिवाविभानिशाप्रभाभा,
स्कराऽरुष्कर्तृचित्रान्तानन्तादि-
ना न्दीलिपिलिबिबलि-
भक्तिक्षेत्रजंघाबाहु हर्धनुर्भ-
क्तसंख्याहः
१३३ हेतुतच्छीलानुकूलेऽशब्द
श्लोककलहगाथावैरचाटुसू
त्रमंत्रपदात्
१३४ भृतौ कर्मणः
१३५ क्षेमप्रियमद्रात्खाण्
१३६ मेघर्तेः खच्
१३७ भयात्
१३८ प्रियवशाद्वदः
१३९ द्विषत्परात्तस्तापेः
१४० मितनखपरिमाणात्पचः
१४१ करीषाभ्रकूलात्कषः
१४२ सर्वात्सहश्च
१४३ भृतृवृधारिजिदमितपश्च
नाम्नि
१४४ वाचंयमो व्रती
१४५ मन्याणिन्
१४६ कर्तुश्शखः
१४७ एजेः
१४८ शुनस्तनाद्धेटः
१४९ नाडीमुष्टिघटीखरीनासि-
कावालद्ध्मश्च
१५० पाणेः
१५१ कूलादुदि रुजवहः
१५२ वहाभ्राल्लिहः
१५३ विध्वरुस्तिलात्तुदः
१५४ शर्धललाटवातद्धारक्तपाजः
१५५ पुरंदरभगंदरैरंमदोग्रंपश्या-
सूर्यंपश्यः
१५६ सुभगाढ्यस्थूलपलितलग्ना-
न्धप्रियन्सुपोऽच्वेश्चौ ख्-
स्नुखकञ् भवः
१५७ कृञः करने खनट्
१५८ भावे चाशितंभवः
१५९ गमः खड्डाः
१६० विहायसो विहश्च
१६१ उरगः
१६२ सुगदुर्गमाधारे
१६३ निर्गो देशे

१६४ गाङ्न्वरश्चामः
१६५ पार्श्वादिभ्यश्शीङः
१६६ उत्तानादिभ्यः कर्तुः
१६७ आधारात्
१६८ भिक्षासेनादायाश्च चरेटः
१६९ पुरोऽग्रतोऽग्रेस्सर्तेः
१७० पूर्वात्कर्तुः
१७१ स्थः कः
१७२ दुहो घश्च
१७३ शोकापनुदतुन्दपरिमृजस्त-
म्बेरमकर्णेजपासुखाहरा-
लक्ष्यहस्तिसूचकाः
१७४ मूलविभुजादयः
१७५ विसभकः
१७६ स्पृशोऽनुदकात् क्विप्
१७७ अदोऽनन्नात्
१७८ क्रव्यात्क्रव्यादावामपक्वादौ
१७९ मन्वन्क्वनिब्विचश्च दृश्यते
१८० त्यदाद्यन्यसमानाद्धीणाद्
दृशेराप्ये क्विबकट्क्साः
१८१ कर्तुर्णिन्
१८२ शीलेऽजातेः
१८३ व्रताभीक्ष्ण्ये
१८४ साधौ
१८५ ब्रह्मवादी
१८६ ठयभेर्भुवो भूते
१८७ करणाद्यजः
१८८ हन्विक्रयः कर्मणः कुत्स्ये
१८९ घ्नो णिन्
१९० ब्रह्मभ्रूणवृत्रात्क्विप्
१९१ सुकर्मपापमन्त्रपुण्यात्कृञः
१९२ सोमात्सुञः
१९३ अग्नेश्चेः
१९४ कर्मण्यग्न्यर्थे
१९५ दृशः क्वनिप्
१९६ राजसहात्कृञ्युधिभ्याम्
१९७ जनोऽनौ डः
१९८ सप्तम्याः
१९९ अजातेः पञ्चम्याः
२०० क्वचित्
२०१ सुपोऽत्
२०२ सुयजो ङ्वनिप्
२०३ भस्मादयः
२०४ क्तक्तवतू
२०५ लुङ्
२०६ रात्रौ वसोऽन्त्ययामा-
स्वापेऽद्य
२०७ अनद्यतने लङ्
२०८ ख्याते दृश्ये
२०९ स्मृत्यर्थेऽयदि लृट्
२१० साकाङ्क्षे वा
२११ अत्यन्तापह्नवे लिट्
२१२ परोक्षे
२१३ हशश्वत्पञ्चाकल्पयन्तःप्रच्छ्ये
लङ् च
२१४ पुरि लुङ् वा
२१५ स्मे च लट्
२१६ ननौ प्रष्टोक्तौ
२१७ सति
२१८ पूङ्यजश्शानः

२१९ वयश्शक्तिशीले
२२० धारीङश्शत्रकृच्छ्रे
२२१ सुञ्द्विषार्हस्सत्र्यरिप्रशस्ये
२२२ तृ साधुधर्मशीलेषु
२२३ भूवृतूवृधूभ्राजसहचरत्वा-
पत्रपालङ्कृञ्निराकृञ्प्रज-
नोत्पचोत्पदोन्मदादिष्णुः
२२४ भजेस्स्नुक्
२२५ ग्लास्थस्स्नुः
२२६ गृधिधृषिक्षिपत्रसः क्नुः
२२७ सन्भिक्षाशंस्विन्दिच्छादुः
२२८ शॄवन्दादारुः
२२९ सद्दाशधेट्सेरुः
२३० निद्रातन्द्राश्रद्धास्पृहिगृहि-
पतिशीङ्दयादालुः
२३१ सहिवहिचलिपापतो
यङ् कः
२३२ दादिसस्त्रिचक्रिजज्ञिनेमिः
२३३ भूवृषस्थाशॄहन्कंगमादुकण्
२३४ लषपतपदः
२३५ क्रुद्भूषार्थसृगृधज्वल्
शुचभश्चानः
२३६ रुचलार्थादकर्मकात्
२३७ हलाद्यन्तान्ङिदितिः
२३८ न दीक्षदीप्सूदृणिङ्यः
२३९ द्रम्क्रमो यङः
२४० यज्वदृशजपादूकः
२४१ जागुः
२४२ शमष्टकदुषद्विषद्रुहदुहयुज-
त्यजरञ्जभजाभ्याहनाऽनुरु-
धो घिनञ्
२४३ आङः क्रीड्यम्यस्मुषः
२४४ समः पृच्सृजज्वरोऽकर्म-
कात्
२४५ वौ विचकषकत्थस्रम्भलस
२४६ लपोऽपे च
२४७ चरोऽतौ च
२४८ लपसृद्रुमथवद्वसः प्रे
२४९ परेस्सृवद्दहमुहः।
२५० देवो क्षेश्च
२५१ क्षिपरटः
२५२ वादेश्च वुञ्
२५३ निन्दहिंसक्लिशखादविना-
शिव्याभाषासूयात्
२५४ उपसर्गादेव देविक्रुशः
२५५ कुट्टलुण्टवृङ्जल्पभि-
क्षादाकट्
२५६ दृक्षीण्वमव्यथाभ्यमपरि-
भूविश्रेरिन्
२५७ प्रात्सूणोः
२५८ मरक्सृघसः
२५९ भञ्जभासमिदो घुरः
२६० वेत्तिच्छिद्भिदः कित्
२६१ सर्तीण्नश्जेष्ट्वरप्
२६२ गत्वरः
२६३ नम्कम्यजस्कम्पस्मिहिंस-
दीपो रः
२६४ स्वप्तृषिधृषो ङ्नज्
२६५ भ्यः क्रुकक्लुकाः
२६६ स्थेशभासपिसकसो वरः

२६७ यायावरश्च
२६८ संविप्राद्भुवोऽनाम्न्युड्
२६९ मितद्र्वादयः
२७० इन्नः ष्वो दैवते
२७१ सञ्चर्थौ करणे
२७२ लूधूसूखनसहचरर्तेः
२७३ ठ्ययो द्रोघनः
२७४ स्तम्बाद्र घ्नश्च
२७५ अत्यु परिघम्
२७६ ष्वो हलक्रोडमुखेत्रट्
२७७ दाठनीशस्युयुज्युनिषिसस्तु-
तुदमिहनहदंशपतः
२७८ धात्री
२७९ मतिपूजार्थशीलाशील्यादि-
भ्यः क्तः
२८० उणादयः
२८१ गम्यादिर्वर्त्स्यति
२८२ लृट्
२८३ परिदेवनानद्यतने लुट्
२८४ पुरायावतोर्लट्
२८५ कदाकर्ह्योर्वा
२८६ किंवृत्ते ऽर्थित्वे
२८७ अर्घ्यसिद्धौ
२८८ लेटि हेतौ
२८९ लेङ् चोर्ध्वमौहूर्तिके

इति शाकटायनीयसूत्रपाठे-
चतुर्थस्याध्यायस्य
तृतीयः पादः

१ पदुजो घञ्
२ सृस्थिस्परठ्याधिमत्स्यबले
३ अकर्तरि
४ इङः
५ ओ वायुवर्णनिवृत्ते
६ पूल्वनीरोर्निरभ्यवोपसर्गे
७ भूश्रयदोऽच्
८ नौ णश्चादः
९ स्वनहसक्षपठो वा
१० यमस्मन्निठ्युये
११ क्वणो वैणे
१२ घेः किः
१३ आप्यादाधारे
१४ रवृगम्वश्चरणद्ग्रहोऽप्
१५ समुद्वाजः पशौ
१६ सर्तिग्लहपणः प्रजनाक्षेयत्वे
१७ प्रमदसंमदौ हर्षे
१८ देशेऽन्तर्घनान्तर्घणौ
१९ प्रघणप्रघाणौ कोष्ठकांशे
२० घनोद्घनापघनोपघ्ननिघोद्घ-
संघा मूर्त्यत्याधानाङ्गास-
न्ननिमितप्रशस्तगणः
२१ ह्वो वश्चोपविसन्यभ्युपे
२२ आङि युद्धे
२३ निपानमाहावः
२४ भावेऽनुपसर्गात्
२५ मद्व्यधजपः
२६ क्वणयमूहस्वनूयो वा
२७ आङि रुप्लोः
२८ ग्रहोऽवे वर्षे

२९ प्रेयुग्यतुलासूत्रे
३० युर्वस्त्री
३१ उदिनीश्रिजः
३२ पूद्रुयौतेर्घञ्
३३ ग्रहः
३४ समि मुष्टौ
३५ युद्रुदोः
३६ स्तार्यज्ञे
३७ परौ ग्रहः
३८ न्यवे शापे
३९ लिप्सायां प्रे
४० द्रुस्तुस्रोः
४१ स्त्रोऽयज्ञे
४२ वौ प्रथनेऽशब्दे
४३ क्षुश्रोः
४४ ठ्युपेशीङः क्रमे
४५ हस्तादेयेऽस्तेयेऽनुदश्चेः
४६ चित्युपसमाधानावासदेहे
कश्चादेः
४७ संघेऽनुपरौ
४८ माने
४९ न्युदि ग्रः
५० क्रौ धान्ये
५१ नौवुः
५२ इणोऽभ्रेषे
५३ परौ क्रमे
५४ द्यूते न्यः
५५ भ्वोऽवज्ञाने वा
५६ स्थादिभ्यः कः
५७ ट्वड्वितोऽथुक्त्री

५८ यजयतप्रच्छस्वपरक्षो नः
५९ विच्छेर्नङ्
६० व्याप्तौ भावेऽनाञिन्
६१ स्त्रियां क्तिन्
६२ लाभादिभ्यः
६३ स्त्र्यथ्यजतोः करणे
६४ गापापचो भावे
६५ स्थो वा
६६ व्यतिहारे ञः
६७ वयुक्षः
६८ व्रज्यजः क्यप्
६९ नाम्नि भृञः
७० समजनिषद्निपत्मन्वि-
दीण्घञ् शीङः
७१ कृञश्शक्तिन्चः
७२ सम्पदादिभ्यः क्तिन् क्विप्
७३ यूतिजूतिसातिहेतिकीर्त्य-
टाव्यामृगयेच्छायाञ्चाकृपाः
७४ ग्लाज्याहो निः
७५ णिवेत्त्यासश्रन्थघट्टवन्दोऽनः
७६ इषोऽनिच्छायाम्
७७ परेर्वा
७८ स्वरो यः
७९ आगुरश्च
८० प्रत्ययात्
८१ गुरोर्हलः
८२ षिच्चिन्तिपूजिकथिकुंभिच-
चर्यन्तघोऽङ्
८३ उपसर्गादातः
८४ भिदादयः क्वचित्

८५ संज्ञाभावे ग्वुः
८६ प्रश्नाख्याने वेञ्
८७ पर्यायोऽर्ह्यर्हर्णे ग्वुः
८८ नञोऽनिश्शापे
८९ नञभावे क्तोऽभ्यादिभ्यः
९० करणाधारे चानट्
९१ पुंनाम्नि घः प्रायः
९२ गोचरसंचरकषनिकषखलभ
 गवहव्रजव्यजापणनिगमम् ।
९३ हलो घञ्
९४ तृस्त्रोऽवात्
९५ समश्च ह्वः
९६ आरदाराध्यायन्यायोद्या-
 वानायाधारावायाः
९७ उदङ्कोऽजले
९८ खनोऽडहरेकेकवकाश्च
९९ दुस्स्वीषतः कृच्छ्राकृच्छ्रे खः
१०० च्वौ कर्त्राप्याद्भूकृञः
१०१ आतोऽनः
१०२ शास्युधिदृशिधृषिमृषः
१०३ आशंस्ये सद्भूतवत्
१०४ क्षिप्राशंसार्थे लृट् लेङ्
१०५ आद्येऽवाजन्माविच्छेदयोः
१०६ वर्त्स्यत्यनहोरात्रेऽवोऽवधौ
१०७ काले परे वा
१०८ लेङ्निमित्तेऽवृत्तौ भूते च
 लृङ्
१०९ वा शेषात्
११० गर्हेऽपिजात्वोर्लट्
१११ कथमि लेङ् च वा
११२ किंवृत्ते लेङ्लृटौ
११३ अमर्षोऽश्रद्धेऽन्यत्रापि
११४ किंकिलास्त्यर्थयोर्लृट्
११५ यच्चयत्रयोर्लेङ्
११६ गर्हे च यच्चयत्रे
११७ चित्रे
११८ लृट् शेषेऽयदौ
११९ वाहेऽप्युते लेङ्
१२० संभावनेऽलमर्थात्
१२१ धातूक्तौ वायदि
१२२ सतीच्छार्थात्
१२३ वर्त्स्यति लृङ्कारणे
१२४ कामाविष्कारेऽकच्चिति
१२५ इच्छार्थे लेङ् लोट्
१२६ विधिनिमन्त्रणामन्त्रणाधीष्ट-
 संप्रश्नप्रार्थने
१२७ प्रैषानुज्ञावसरे लोट् च्यप्
१२९ लेङ् चोर्ध्वंमुहूर्तात्
१२९ लोट् स्मे
१३० अधीष्टे
१३१ कालवेलासमयावसरे
 तुम्वा
१३२ लेङ् यदि
१३३ तृच्यप् चार्हे
१३४ शिनृच्यपावश्यकाधमर्ण्ये
१३५ शक्तौ लेङ् च्यप्
१३६ लिङ् लेङाशिषि
१३७ माङि लुङ्
१३८ लङ् च स्मेन
१३९ भृशाभीक्ष्ण्ये लोट् तस्मिं-

स्तथार्थे
१४० प्रचये वा सामान्यार्थे
१४१ निषेधेऽलङ्खलौ क्त्वा
१४२ परावरे
१४३ व्यतिहारे मेङस्तुल्यकर्तृके
१४४ प्राक्काले
१४५ पूर्वाग्रे प्रथमाभीक्ष्ण्ये खमुञ्
१४६ अन्यथैवंकथमित्थमः कृञोऽनर्थकात्
१४७ यथातथादीर्ष्याप्रत्युक्तौ
१४८ आप्यादाक्रोशे
१४९ स्वादोश्व्यर्थे:
१५० विदृशिभ्यः कार्त्स्न्ये णम्
१५१ यावता जीवविन्दात
१५२ चर्मोदरात्पूरे:
१५३ वृष्टीयत्वेऽस्यो लुक्वा
१५४ चेलार्थात् क्नोपे:
१५५ तृतीययोपदंशः
१५६ हिंसार्थात्तुल्याप्यात्
१५७ तत्समास्योपात्पोड्रुधकृष:
१५८ प्रमाणसमासत्त्योः
१५९ तूर्णेऽपादानेन
१६० द्वितीयया
१६१ स्वांगेनाध्रुवावाच्येन
१६२ विशिपतिपदिस्कन्दाद्वीप्साभीक्ष्ण्ये
१६३ तृष्यसः काले नान्तरे
१६४ ग्रहादिशो नाम्ना
१६५ कृञोऽव्ययेनानिष्टोक्तौ णम्क्त्वौ
१६६ तिरश्चापवर्गे
१६७ भुवोऽन्वानुलोम्ये
१६८ तूष्णीमा
१६९ स्वाङ्गत्सा कृञ:
१७० वौ धाञ् विनानाना
१७१ शुष्कचूर्णरूक्षादाप्यात्पिष-स्तस्मिन् णम्
१७२ कृञ्ग्रहोऽकृतजीवात्
१७३ निमूलात् कष:
१७४ समूलाद् ग्रश्च
१७५ करणात्
१७६ हस्तार्थाद्वृत्वर्तिग्रहः
१७७ स्वस्नेहनार्थात्पुषिपष:
१७८ नाम्नि बंध:
१७९ आधारात्
१८० कर्तुर्जीवपुरुषान्नशिवहः
१८१ ऊर्ध्वात् पूरशुष:
१८२ आप्यच्वेवे
१८३ समर्थास्त्यर्थधृषज्ञाशकग्लाघटसहार्हा रभलभक्रमे तुम्
१८४ क्रियायां तदर्थायां वुण् लृट् च
१८५ कर्मणोऽण्
१८६ लेङ्तुमिच्छार्थे तुल्यकर्तृके

इति श्री श्रुतकेवलिदेशीयाचार्यस्य शाकटायनकृतौ शब्दानुशासने चतुर्थस्याध्यायस्य चतुर्थः पादः ॥

समाप्तोऽध्यायश्च चतुर्थः ॥



गणनेयं सूत्राणामनुष्टुभामर्धसप्तमशतीह ।
त्रीणि सहस्राणि शते द्वे षट्त्रिंशच्च योगानाम् ॥
संज्ञानियमनिषेधाधिकारनित्यापवादविधिपरिभाषाः ।
अतिदेशविकल्पाविति गतयः शब्दानुशासने सूत्राणाम् ॥

## शाकटायनीयसूत्रपाठस्समाप्तः

ओम् शांतिः शांतिः ।

॥ ॐ ॥

ओनमः सिद्धेभ्यः ।

# शाकटायनगणपाठः ।

## डाच्च्व्यूर्याद्यनुकरणं च ति ॥ १ । १ । २६ ॥

ऊरी उररी अंगीकरणे विस्तारे च । पांपी विध्वंस् माधुर्ये च । ताली आताली वर्णे । धूली कांती । शकला शंसकला ध्वंसकला भ्रंसकला आलंधि ( म्भि ) केवासी, शेवाली, पर्पाली, मस्मसा, मसमसा, मसमस्ना एते हिंसायाम् । गुलुगुधा पीडायाम् । सजूः सहार्थे । फलू, फली, आक्ली, किक्ली, विकारे । श्रौषट्, वौषट्, वषट्, स्वाहा, स्वधा दाने श्रत् श्रद्धाने । प्रादुस्, आविस् प्रकाश्ये एते ऊर्यादयः ।

## साक्षादाद्यच्वि ॥ १ । १ । ३५ ॥

साक्षात्, मिथ्या, चिन्ता, भद्रा, रोचना, अमा, आस्था, प्राकर्षा, प्रजुरा, जिजरा, जिजरुहा, संसर्पा, अर्थे, अग्नौ, वशे, एकपने, प्रहसने, विसहने, । अर्थ इत्यादयः सप्तमीप्रतिरूपकः । लवणं, उष्णं, शीतं, उदकं, आर्द्रकं, लवणादीनामिह तिसंज्ञासन्नियोगे मकारान्तत्वं निपात्यते । नमस्, प्रादुस्, आविस् इति साक्षादादिः ।

## तस्वन्ङामधणूतस्यांक्त्वातुंतिसुङ्प्तस्वाभस्वरा-दीन्तव्ययम् ॥ १ । १ ॥ ३८ ॥

तस् वत् ङाम् इत्येतदंतानि घवर्जितस्यातानि आम् क्त्वा अम् तुम् इत्येतदंतानि तिसंज्ञकानि सुङ्प्तसप्रतिरूपकाणि स्वरादीनि च शब्दरूपाणि अव्ययसंज्ञानि भवन्ति ।

तस् "एकदिशि तस्" ऐलुमालतो विद्योतते । वत्-मुनिवद्वृत्तं साधुवदाचरितम् । क्षत्रियवद्युध्यते । डां—उच्चैस्तराम् । उच्चैस्तमाम् । अथण् तसि—त्रिपृष्ठतः । अश्वग्रीवतः । सर्वतः । सर्वत्र । बहुशः । अल्पशः । आम्—दयांचक्रे । क्त्वा-हृत्वा । कृत्वा । अम्—पूर्वं भोजम् । अग्रेभोजम् स्वादुंकारं, सपन्नंकारम् । कन्यादर्शं वरयति । यावज्जीवमदात् । तुम्—कर्तुम् । हर्तुम् । चर्तुम् । स्वप्तुम् तिः—अधः कृत्य । प्रहृत्य । निहित्य । प्रकृत्य । सुडाभम्—दाम्नायाम्, मात्रायाम्, अस्ति, स्वस्ति, असि, स्यात्, स्वाभः—यथा, तथा, कथं, कुतः । स्वरादिः-स्वस्तिष्ठति, स्वः पश्यति, अत्युच्चैसम् इत्यत्र उच्चैर्यस्तमतिक्रान्तस्तस्य पूर्वपदार्थस्य सुबिति न श्लुक् ।

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥

तमादि ग्रहणं किम्? एकः, द्वौ, बहवः, षट्, सप्त, अष्टौ, आपो वर्षाः । पचतिरूपम् । पचतोरूपम् । पचतिकल्पम् । पचतस्कल्पम् । स्वर् अन्तर् प्रातर् पुनर् सर् तर् उच्चैस् नीचैस् शनैस् ऋधक् ऋते युगपत् आरात् पृथक् ह्यस् श्वस् दिवा सायं चिरं ईषत् मनाक् जोषम् ज्योषम् तूष्णीम् बहिस् अवस् निकषा समया मृषा स्वयं नक्तम् इद्धा साभि वता सनं नाना विना अन्यत् क्षमा उपांशु विहायसा दोषा मुधा मिथ्या पुरा मिथो मिथु मिथ प्रायस् मुहुस् प्रवाहु आर्यं अलम् अभीक्ष्णम् सार्धम् मनस् हिरुक् प्रशान् च बाढा अह एव एवं मानं शश्वत् नित्यम् सूपत् कूपत् कूबित् नेत् चेत् कच्चित् यत्र नह हन्त माकिस् नकिम् माङ् नञ् यावत् त्वावत् स्वावत् त्वै न्वै वै रै श्रौषट् वषट् स्वाहा स्वधा ओम् हिस्

खलु किल अथम् अथ स्म अ इ उ ऋ ॠ लृ ॡ ए ऐ ओ औ आदह आतंक यावत् तावत् किम् यत् यद् तद् धिक् हे है पाट् प्याट् अहो उताहो अतो अन्धो मा नु ननु हि तु नु इति इव चन घु वत आम् शप् कुकम् शुकम् सुकम् नुकम् नहिकं सत्यं ऋतं श्रद्धा नो हि मचेत् शातु अव अह अथ अहाह स्विद् बाढ्या दिष्ट्या पशु पट् सह अनुषक् अङ्ग युत् ताजक् अरे अये अवे वद् वेड् वाद् हुम् चुम् कित् नमो ईम् किं सिं प्र परा अप सम् अनु अव निस् दुस् वि आङ् नि अधि अपि अति सु उत् अभि प्रति परि उप इति स्वरादयः आकृतिगणः ।

## कस्कादिषु । १ । १ ॥ १८० ॥

कस्कः, कौतस्कुतः, भ्रातुष्पुत्रः, शुनस्कर्णः सद्यस्कालः, मस्कारडः, अयस्कान्तः, अयस्पिंडः, सर्पिष्कुण्डिका, धनुष्कपालं, बर्हिष्पात्रम्, यजुष्पात्रम् इति कस्कादिराकृतिगणः ।

## अंतक्षुभ्नादीनाम् । १ । २ ॥ ५४ ॥

क्षुभ्ना तृप्नु आचार्यानी आचार्यभोगीन युवन् अहन् पक्षन् वन मन सर्वनाम नट नधन नद नृत्त नदी निवेश निवास अग्नि अनूप नन्दिन् नन्दन् नर्तन् गहन नदन । इति क्षुभ्नादिराकृतिगणः ।

## सर्वादेङ्यस्यैः स्मिन्स्मात्स्मै । १ । २ ॥ १६६ ॥

सर्व विश्व उभ उभयट् अन्य अन्यतर इतर डतर त्व त्वत् नेम सम सिम । पूर्वापरावरदक्षिणोत्तरापराधराणि व्यवस्थायाम् । स्वमज्ञातिधनाख्यायाम् । अन्तरं बहिर्योगोपसंव्यानयोरपुरि । त्यद् तद् यद् अदस् इदम् एतद् एक द्वि युष्मद् अस्मद् भवतु किम् इति सर्वादिः ।

## रूढादिभ्यः । १ । ३ ॥ ४ ॥

रूढ, क्रोढ, आढ, व्यढ, अपिशल, अपक्षिल, भूरीकं, भूलीकं, कपिष्ठल, शालासल, शालासुधात्री' चोपयत्, चेटयत्, शिकयत्, शीतयत् इति रूढादयः । बहुवचनादाकृतिगणोऽयम् ।

## कुंभपद्यादौ । १ । ३ ॥ १० ॥

कुम्भपद, कलशपद, द्रोणीपद, सूचिपद, जालपद, एकपद, अष्टापद, शतपद, शीतिपद, सूत्रपद, सूत्रशीतिपद, मुनिपद, दासीपद गोधापद, सूकरपद, सुपद, विपद, निष्पद, अर्धपद, कुणिपद, कृष्णपद, शकृत्पद, इति कुम्भादिः ।

## टिड्ढणञ्जगञ् गौरादिभ्यः । १ । ३ ॥ १४ ॥

गौर । मत्स्य । मनुष्य । ऋष्य, हय, गवय, मुकय, शिङ्ग, शृङ्ग, घट, पट, द्रुण, द्रोण, हरीकण, वटर, उकण, आमलक, कुवल, बदर, बिम्ब, तर्कार, शर्कर, शालद, शष्कुण्ड, गडुज, सुषव, पाण्डश, आनन्द, आढक, सपाट, शष्कुल, सूर्य, सूत्र, सूष, यूष, मूषा, वत्तालका, मल्लक, मालत, धातक, वेतस्, वृस, अतस्, उमा, भङ्ग, मह, मठ, देह, लवण, मेद, सौधर्म, अयस्थूण, भौलिङ्गी, आलम्बी, आलर्क, औदाहमानी, गौरिकी, भौलिकी, आरट, कटेट, नाट, मूलाट, अधिकार, सुन्दर, मन्दर, मण्डल, पट, पिण्ड, नूर्द, सूर्द, गूर्द, पाण्ड, लोहाण्ड, कदर, कदल, तरुण, तलुन, अनडुही, अनडुवाही, आग्रहायणी, पृथिवी, विकल, विष्कल, आश्मरथ्या, काव्य, वैश्य, एहि, पर्येहि, अराल, उद, पिद, षण्ड, नद, भष, प्लव, चर, गर, तर, चोर, गहा, सूद, देव, पिप्पल, कोशातक, शम, हरीतक, करीर, इति गौरादिराकृतिगणः ।

क्रोडादिभ्यः । १ । ३ ॥ ३३ ॥

क्रोड, खुर, गोख, उख, पाल, सफ, गुड, इति क्रोडादिः । बहुवचनादाकृतिगणोऽयम्—तेन सुभगा, सुकरा ।

सपत्न्यादौ । १ । ३ ॥ ४१ ॥

सपत्न, समान, एक, वीर, पिण्ड, पुत्र, भ्रातृ इति सपत्न्यादिः ।

बह्वादेः । १ । ३ ॥ ६१ ॥

बहु, पद्धति, चण्ड, अराल, उपाध्याय, कमल, कृपण, विशाल, विशंकट, विकट, भरुज, कल्याण, उदार, पुराण इति बह्वादिः ।

# अथ द्वितीयाध्यायः ।

तिष्ठद्ग्वादयः । २ । १ ॥ १५ ॥

तिष्ठद्गु वहद्गु आयतीगवं एते काले वर्तन्ते । खलेयवम्, खरेबुसम्, लूनयवम्, लूयमानयवम्, पूतयवम्, पूतमानयवम्, संहृतबुसम्, एते प्रथमान्ता काले देशे चेत्येके । समभूमि, समंभूमि, समपदाति, समंपदाति समयक्षम्, समानतीर्थम्, समानंतीरम्, अघोनासम्, सुषमम्, विषमम्, निष्षमम्, दुष्षमम्, अपरसमम्, आयातिसमम्, पुण्यसमम्, पापसमम्, एकान्तम्, प्राह्णम्, संप्रति, असंप्रति, इज्–दंडादंडि, मुसलामुसलि, द्विदंडि, द्विमुसलि, इति तिष्ठद्ग्वादिः ।

पूर्वाद्यूनार्थैः । २ । १ ॥ ३८ ॥

पूर्व, अवर, सदृश, सम, विकल, निपुण, मिश्र, श्लक्ष्ण इति पूर्वादयः । आकृतिगणोऽयं पाठः तेन–धान्येनार्थः धा-

